नात्मधर्मत्वमथवोभयधर्मत्वमिति विकल्पयन्नात्मधर्मत्वं निराकर्तुमाह— चितीति । अहंकरणं चितिशक्तिगुणः किं चिद्रूपस्यात्मनो गुणः किम्, किमु बुद्धेर्गुणः, अथ वा बुद्ध्यात्मनोरुभयोर्गुण इतीत्थं मनसानलसैरालस्यरहितैर्यैविभिरुपपत्तिभिर्युक्तिभिश्चिन्त्यं विचार्यम् । किमर्थम्? आत्महितम्, आत्मनो हिताय मोक्षायेत्यर्थः ॥ २१ ॥

उपलभ्यमहंकरणं न भवे-
रत्पुरुषस्य गुणो यदि तर्हि भवेत् ।
गुणिरूपमथावयवं गुणिनो
न विहाय गुणः पृथगस्ति यतः ॥

उपपत्तिभिर्विचार्यमाणे किं युक्तमित्याकाङ्क्षायामात्मगुणत्वमयुक्तमित्याह— उपलभ्येति । अहंकरणं पुरुषस्य गुणो यदि भवेत्तर्हि तदहंकरणं पुरुषेणोपलभ्यं न भवेत्, आत्मना प्रकाश्यं न भवेत् । तत्र हेतुमाह— गुणिरूपमिति । गुणो धर्मो गुणिरूपं गुणिस्वरूपं गुणिनोऽवयवं वा विहाय गुणिनः सकाशात्पृथङ् न तिष्ठति, यथा पटगतं शौक्ल्यं पटं तदवयवभूतं तन्तुं वा विहाय पृथङ् न तिष्ठति ।

तद्वदहंकारोऽप्यात्मगुणश्चेदात्मनः सकाशात्पृथक् न तिष्ठति । तथा सति तयोरभेदात्प्रकाश्यप्रकाशकभावो न घटत इति भावः ॥ २२ ॥

न गुणो गुणिनि स्थितवान्गुणिना
विषयीक्रियते न च तस्य गुणैः ।
न हि देशकृता न च वस्तुकृता
गुणिनोऽस्ति गुणस्य भिदा तु यतः ॥

तर्हि गुणिन्येव स्थितः सन्गुणो गुणिना तद्गुणैर्वा प्रकाश्यतामित्यत्राह— न गुण इति । गुणिनि स्थितवान्गुणो गुणिना तस्य गुणैर्वा न विषयीक्रियते न प्रकाश्यते । अहंकाराख्यो गुणो ज्ञानगुणेन न प्रकाश्यत इत्यर्थः । कुतः कारणाद्गुणिना गुणो न प्रकाश्यत इत्यत्राह— न हीति । गुणस्याहंकारगुणस्य गुणिन आत्मनः सकाशाद्देशकृता भिदा नास्त्यात्मनः सर्वगतत्वात्, तथा वस्तुकृतापि भिदा नास्ति विचार्यमाण आत्मव्यतिरिक्तवस्त्वन्तराभावाद्वस्तुनिबन्धनो भेदो नास्तीत्यर्थः । भेदस्य धर्मिप्रतियोगिसापेक्षत्वाद्घटात्पटस्य भेद इति धर्मिप्रतियोगिनोश्च भेदसा-

पेक्षत्वादन्योन्याश्रयादिदोषप्रसङ्गात्कस्यापि भेदो दुर्निरूप इति भावः ॥ २३ ॥

न परस्परमग्निगुणोऽग्निगतो
विषयत्वमुपैति कदाचिदपि ।
न हि वह्निरपि स्वगुणं स्वगतं
विषयीकुरुते स्वगुणेन भुवि ॥ २४ ॥

ज्ञानगुणेनाहंकारो न प्रकाश्यत इत्यत्र हेतुमाह— न परस्परमिति । अग्निगतोऽग्निगुणः परस्परमन्योन्यं प्रकाशाख्येन गुणेनोष्णगुणो वोष्णगुणेन प्रकाशगुणो वा कदाचिदपि विषयत्वं नोपैति । यद्यग्निगतोऽग्निगुणः परस्परं प्रकाश्यप्रकाशकभावं नोपैति, तर्हि वह्निः स्वयमेव स्वगतेन गुणेन गुणान्तरं प्रकाशयत्वित्यत्राह— न हीति । भुवि भूमौ वह्निरपि स्वगतं गुणं स्वगतेन प्रकाशाख्येन गुणेन न विषयीकुरुते न प्रकाशयत्यदृष्टत्वात् । तस्माद्गुणिना न गुणस्य वेद्यत्वम् , अथ वा गुणिनो गुणैर्वा वेद्यत्वं न संभवतीत्यर्थः ॥ २४ ॥

कणभुग्यमचीक्लृपदात्मगुणं
गुणपूगमनित्यमनात्मगुणम् ।
अनयैव दिशा स निराक्रियतां
न हि नित्यमनित्यगुणेन गुणि ॥

अहंकारस्यात्मगुणत्वे तस्यात्मना प्रकाश्यत्वायोगादहंकार आत्मगुणो न भवतीत्युक्तम् । तत्रेदमाशङ्क्यते बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा आत्मविशेषगुणा इति कणादवचनात्कथमात्मनो निर्गुणत्वं प्रतिपाद्यत इति । अत्राह— कणभुगिति । परमार्थतोऽनात्मगुणमनात्मनो बुद्धेर्गुणमनित्यं यावद्द्रव्यभाविनं यं गुणपूगं गुणसमूहं कणभुक्कणाद आत्मगुणमचीक्लृपदात्मगुणत्वेन कल्पितवान्स गुणपूगोऽनयैव दिशा सम्यक् निराक्रियताम् । यथाहंकारस्यात्मगुणत्वे तस्यात्मना प्रकाश्यत्वं न घटते गुणगुणिनोरत्यन्तभेदाभावात्, तथा बुद्ध्यादिरप्यात्मगुणश्चेत्तस्यात्मना प्रकाश्यत्वं न घटत इत्यनया दिशा निराक्रियतामित्यर्थः । किंच बुद्ध्यादेरनित्यत्वादपि नित्यात्मगुणत्वं न घटत इति हेत्वन्तरमाह— न हीति । नित्यमात्मवस्त्वनित्येन बुद्ध्यादिगुणेन गुणि न भवतीत्यर्थः ॥ २५ ॥

वियतः प्रभवं प्रवदन्ति यतः
श्रुतयो बहुशः खमनित्यमतः ।
उपमानमनित्यगुणं वियतो
न हि नित्यमिहास्ति कणादमते ॥

ननु नित्यस्याकाशस्यानित्येन शब्दगुणेन गुणित्वं दृष्टम्, तद्वदत्रापि भविष्यतीत्याशङ्क्याह— वियत इति । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'नाभ्या आसीदन्तरिक्षम्' इत्याद्याः श्रुतयो बहुशो बहुवारं वियत आकाशस्य प्रभवमुत्पत्तिं प्रवदन्ति यतोऽतः कारणात्खमाकाशमनित्यम् । अतः कारणादाकाशदृष्टान्तेनात्मनोऽनित्यगुणेन संयोगाख्यगुणेन गुणित्वं न साधयितुं शक्यमित्यर्थः । तर्ह्याकाशव्यतिरिक्तं नित्यद्रव्यमात्मनोऽनित्यगुणेन गुणित्वे दृष्टान्तभूतं वैशेषिकसमये किंचित्प्रसिद्धमस्तीत्याशङ्क्य परिहरति— उपमानमिति । इह कणादमते कणादसिद्धान्ते वियतोऽन्यदनित्यगुणं क्षणिकगुणं नित्यं नित्यद्रव्यं दृष्टान्तभूतं नास्ति । तस्मादात्मनोऽनित्यगुणेन गुणवत्त्वं न संभवतीत्यर्थः ॥

मनसा पुरुषः पुरुषेण मनो
 नभसा मुसलं मुसलेन नभः ।
न हि योगवियोगमुपैति कुतो-
 ऽवयवित्वनिराकरणादमुतः ॥ २७ ॥

इह रज्जुघटादि हि सावयवं
 समुपैति युजामितरेतरतः ।
इति दृष्टमतोऽन्यददृष्टमपि
 स्वयमूह्यमिदं न परित्यजता ॥ २८ ॥

ननु यदि नित्यस्यानित्यगुणसंभवो नास्ति तर्हि कथमात्ममनसोर्नभोमुसलयोर्मूर्तामूर्तयोरेव संयोगाख्यो गुण इति चेन्मैवम्, तस्याप्रसिद्धेरित्याह— मनसेति । इहेति । सावयवं रज्जुघटादीतरेतरतः परस्परेण युजां योगं समुपैतीत्येतल्लोके दृष्टं यतोऽतः कारणादतोऽन्यददृष्टमपि यद्वस्तु तत्रापि सावयवयोरेव संयोगो भवति । एतत्स्वयमूह्यमिदं दृष्टमपरित्यजताविस्मृतवता पुरुषेणेत्यर्थः ॥ २७ ॥ २८ ॥

न हि सावयवं विगतावयवै-
र्विगतावयवं च न सावयवैः ।
उपयाति युजामिति दृष्टमिदं
यत एवमतः स्थितमुक्तमदः ॥ २९ ॥

ननु यदि दर्शनं प्रमाणं तर्हि सावयवनिरवयवयोरपि नभोमुसलयोः संयोगदर्शनादत्रापि दर्शनं प्रमाणं भवतीत्याशङ्क्य नभसोऽतीन्द्रियत्वात्तत्समवायिनः संयोगस्यापि तथात्वाद्दर्शनं प्रमाणं न भवेदित्याह— न हीति । सावयवं वस्तु विगतावयवैर्विगतावयवं च सावयवैर्युजां नोपैति । इदमेव लोके दृष्टम्, न तु सावयवनिरवयवयोः संयोगः कुत्रापि दृष्टो येन दर्शनं प्रमाणं स्यात् । अयं भावः— नभोमुसलयोः संयोगः प्रत्यक्षो न भवति संयोगाश्रयस्यातीन्द्रियत्वे सति संयोगस्यापि तथात्वाद्वायुवनस्पतिसंयोगवदिति । तस्मान्मुसलनभसोः संयोगस्यातीन्द्रियत्वे द्रष्टुमशक्यत्वादत्रापि दर्शनं प्रमाणमिति पूर्ववादिनोक्तमतिचतुरमिति । यथोक्तन्यायेन साधितमर्थमुपसंहरति— यत इति । यत एवं यस्मादेवं सावयवैरेव संयोगो दृष्टस्ततः कारणान्मदुक्तं स्थितम् । आत्ममनसोर्नभोमुसलयोर्वा सं-

योगविभागौ न भवत इति यन्मया पूर्वमुक्तं तदिदं सुस्थि-
तमित्यर्थः ॥ २९ ॥

न हि कल्पितभागसमागमनं
विगतावयवस्य घटेत कुतः ।
वितथत्वमतिः सुदृढा तु यतः
परिकल्पितवस्तुषु नित्यमतः ॥ ३० ॥

ननु निरवयवमप्युपचरितावयवैः संयोगमनुभविष्यतीति चेन्नैवमित्याह— न हीति । विगतावयवस्य स्वत एव निरवयवस्य वस्तुनः कल्पितभागसमागमनं कल्पितभागेन समागमनं संयोगो न घटेत । तत्कुत इत्यत्राह— वितथत्वमतिरिति । परिकल्पितवस्तुषु वितथत्वमतिर्मिथ्यात्वबुद्धिः सुदृढा शुक्तिरजतादौ सम्यग्व्याप्ता । अतः कारणात्कल्पितभागसमागमनं न घटत इत्यर्थः ॥ ३० ॥

इह वेदशिरःसु तदर्थविदः
प्रवदन्ति समस्तजगत्प्रकृतिम् ।

परमात्मपदं द्दशिमात्रवपु-
ध्रुवमेकमतोऽन्यदनित्यमिति ॥ ३१ ॥
अत एव न किंचिदुदाहरणं
ध्रुवमस्ति परस्य विनाशिगुणम्।
यत एवमतः स्थितमुक्तमदो
न हि नित्यमनित्यगुणेन गुणि ॥

किं चात्मनो बुद्ध्यादिभिरनित्यैर्गुणैर्गुणित्वं ब्रुवाणस्य वैशेषिकस्यानुमानस्य दृष्टान्तापेक्षकत्वादेवंरूपस्य दृष्टान्तस्य नित्यं निर्गुणमेवाद्वितीयं ब्रह्म, ततोऽन्यत्सर्वं वाचारम्भणमनित्यमिति ब्रुवन्तं वेदान्तवादिनं प्रति दर्शयितुमशक्यत्वाच्च नित्यमनित्यगुणेन गुणीत्यस्य पक्षस्यासंभव एवेत्याह— इहेति श्लोकद्वयेन । इह वेदान्तमते तदर्थविदो वेदान्ततात्पर्यज्ञाः 'एकमेवाद्वितीयम्' 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिषु वेदशिरःसु परमात्मपदमेव वस्तुतोऽन्यदनित्यमिति वदन्ति । कीदृशं परमात्मपदम्? मत-

स्तजगत्प्रकृतिं निखिलजगद्विवर्ताधिष्ठानम्, अत एव दृशि-मात्रवपुः केवलज्ञप्तिविग्रहम्, अत एवैकं नानात्वरहितं ध्रुवं सत्यम्, अतोऽन्यत्सर्वं जगदनित्यम्। अत एव परस्य वैशेषिकस्य विनाशिगुणं वस्तु नित्यं किंचिदप्युदाहरणं नास्ति। यत एवमतः कारणान्नित्यमनित्यगुणेन गुणि न भवतीति यन्मया पूर्वमुक्तं तदिदं सुस्थितं सुस्थिरमित्यर्थः॥

**उपलभ्यमहंकरणं भवितुं**
**क्षमते दृशिरूपगुणो न यतः।**
**विषयाकृतिरञ्जितधीगुणव-**
**द्विषयत्वमहंकरणस्य ततः॥ ३३॥**

एवं प्रसङ्गागतं कणादमतं निरस्येदानीमहंकारस्यान्तः-करणधर्मत्वमनुसंदधानस्तस्यात्मधर्मत्वमनुचितमित्याह—उपलभ्यमिति। अहंकरणमुपलभ्यं दृश्यं भवितुं क्षमते दृशिरूपमात्मवस्तु स्वयंप्रभत्वादुपलभ्यं न भवेदिति यतः कारणाद्दृश्यास्याहंकारस्य दृगात्मगुणत्वं न घटते ततोऽहंकरण-स्यापि विषयाकृतिरञ्जितधीगुणवद्विषयत्वमेव। तत आत्म गुणत्वं न संभवति किं त्वन्तःकरणधर्मत्वमेवेत्यर्थः॥३३॥

विषयप्रकृतिं प्रतिपन्नवतीं

मतिवृत्तिमहंकरणं च मतेः ।

उभयं परिपश्यति योऽविकृतः

परमात्मसदुक्तिरसौ पुरुषः ॥ ३४ ॥

अहंकारस्यात्मगुणत्वनिराकरणपूर्वकं परिशोधितस्य त्वं पदार्थस्य परिशोधितेन तत्पदार्थेनैक्यलक्षणं वाक्यार्थं कथयति— विषयेति । विषयप्रकृतिं प्रतिपन्नवतीं मतिवृत्तिं दृश्याकारां मतिवृत्तिं मतेर्द्रष्ट्राकारपरिणामाहंकरणं चेत्येतदुभयं बुद्धिपरिणामं यः प्रत्यगात्माविकृतः सन्परिपश्यति, असौ बुद्धिसाक्षी पुरुषः स्वयमेव परमात्मसदुक्तिः परमात्मेत्युच्यते 'नान्योऽतोऽस्ति द्रष्टा', 'तत्त्वमसि' इत्यादिश्रुतेरित्यर्थः ॥ ३४ ॥

ननु देहभृदेष कथं भवता-

भिहितः परमात्मसदुक्तिरिति ।

न विरुद्धमवादिषमेतमहं

श्रुतिरप्यमुमर्थमुवाच यतः ॥ ३५ ॥

उक्तसमन्वये प्रत्यक्षादिप्रमाणान्तरविरोधमाशङ्कते— नन्विति । एष देहभृत्संसारित्वेन प्रतीयमानो जीवस्तद्विरुद्धः परमात्मेति भवता कथमभिहित इति । प्रतीयमानस्य संसारस्यान्तःकरणोपाधिनिबन्धनत्वान्मैवमिति विरोधं परिहरति— नेति । तत्त्वंपदार्थयोः किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्मस्य मायातत्कार्यान्तःकरणोपाधिनिबन्धनत्वेन विरोधाभावात् । उभयत्रापि विशिष्टयोरेकत्वासंभवेऽपि जहदजहल्लक्षणया विरुद्धांशप्रहाणेनाविरुद्धाद्वयसदानन्दप्रत्यग्बोधस्य त्वंपदलक्ष्यार्थस्य शुद्धसदानन्दाद्वयस्य बोधस्य तत्पदलक्ष्यार्थस्यैकलक्षणलक्षितत्वेन विरोधासंभवात् ॥ ३५ ॥

**अमतं न मतेरमतस्तदिदं**
**यदमुत्र तदेव तु कश्चिदिति ।**
**श्रुतिषु प्रतिपादितमस्य दृशेः**
**परमात्मपदत्वममूषु भृशम् ॥ ३६ ॥**

न किंचिदपि विरुद्धमत्रादिषमित्यस्मिन्नर्थे श्रुतिं प्रमाणयति— अमतमिति । 'अमतं मन्त्रविज्ञातं विज्ञातृ' इत्यक्षरब्राह्मणम् । 'न मतेर्मन्तारं मन्वीथाः' इत्युषस्त-

ब्राह्मणम् । 'अमतो मन्ता' इत्यन्तर्यामिब्राह्मणम् । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म' इति मधुब्राह्मणम् । 'तत्त्वमसि' इति च्छान्दोग्यं च । तदिह विवक्षितम् । 'इदं सर्वं यदयमात्मा' इति मैत्रेयीब्राह्मणम् । 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' इति कठवल्ली । 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' इति तलवकारः । 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति कठवल्ली । तथा च श्रुत्यन्तरम्— 'अन्तर्याम्यमृतः' 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्म' 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥' 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' 'योऽसावसौ पुरुषः सोऽहमस्मि' 'अन्यदेव तद्विदितादथो अविदितादधि' 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥'

'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥' 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्' 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन' 'ब्रह्मैव सन्ब्रह्माप्येति' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि। अमूषु श्रुतिष्वस्य दृशेर्बुद्धितद्वृत्तिसाक्षिणः प्रत्यग्बोधस्य परमात्मपदत्वं सुखैकतानकूटस्थज्ञप्तिरूपत्वं भृशं तात्पर्येण प्रतिपादितं यस्मात्तस्मात्त्वंपदार्थयोस्तादात्म्ये कश्चिद्विरोधो नास्तीत्यर्थः ॥

यदनभ्युदितं वदनेन सदा
नयनेन च पश्यति यन्न सदा।
श्रवणेन च यन्न शृणोति सदा
मनसापि च यन्मुते न सदा ॥३७॥

'तदेव ब्रह्म त्वं विद्धि' इत्यादितलवकारश्रुतिं प्रकट-

५

यति सार्धश्लोकद्वयेन । तत्र 'यद्वाचानभ्युदितम्, यच्चक्षुषा न पश्यति, यच्छ्रोत्रेण न शृणोति, यत्प्राणेन न प्राणिति, यन्मनसा न मनुते' इतीमं भागं विवृणोति— यदनभ्युदितमिति । सदा वदनेन वागिन्द्रियेण यदात्मतत्त्वमनभ्युदितं साक्षादनभिहितम्, सदा नयनेन चक्षुरिन्द्रियेण यत्तत्त्वं न पश्यति जनः, सदा श्रवणेन श्रोत्रेन्द्रियेण यन्न शृणोति, सदा मनसान्तःकरणेनापि यत्तत्त्वं न मनुते रूपादिराहित्याद्उभयाकारकरणेनापि तदात्मतत्त्वं न प्रकाश्यते स्वयंप्रभत्वादित्यर्थः । तर्हि शास्त्रोपदेशानर्थक्यमिति न मन्तव्यम्, अविवेकादात्मन्यारोपितातद्धर्मनिरसनेनात्मनो नित्यमुक्तत्वप्रतिपादकत्वादिति भावः ॥ ३७ ॥

**वदनं नयनं च तथा श्रवणं**
**मन एव च येन मतं सततम् ।**
**अवगच्छ तदेव पदं परमं**
**त्वमिति श्रुतिरीक्षितुरुक्तवती ॥३८॥**

'येन वागभ्युद्यते, येन चक्षूंषि पश्यति, येन श्रोत्रमिदं श्रुतम्, येनाहुर्मनो मतम्, येन प्राणः प्रणीयते' इतीमं

भागं विवृणोति— वदनमिति । ननु वदनं वागिन्द्रियं नयनं चक्षुरिन्द्रियं तथा श्रवणं श्रोत्रेन्द्रियं मन एव च चकारात्तत्परिणामश्च मतं प्रकाशितम् । जडस्वभावं वागादिकरणं चिद्रूपेणात्मनानुगृहीतमेव स्वस्वविषये प्रवर्तितुं क्षममित्यर्थः । 'तदेव ब्रह्म त्वं विद्धि' इतीमं भागं विवृणोति— अवगच्छेति । त्वं तदेव परमं परमात्मत्वेनावगच्छेतीत्थंप्रकारेण श्रुतिरीक्षितुर्द्रष्टुमिच्छोरधिकारिणः पुरुषस्यात्मतत्त्वमुक्तवत्युपदिष्टवतीत्यर्थः ॥ ३८ ॥

परमात्मपदत्व इयं च मया
श्रुतिरल्पकणोक्तिरिहाभिहिता ।
अणिमादिगुणं सदिति प्रकृतं
तदसि त्वमिति श्रुतिरभ्यवदत् ॥

एवं परमात्मपदत्वे तत्प्रतिपादिकेयं श्रुतिश्चाल्पकणोक्तिरीषत्प्रमाणत्वेनाभिहिता प्रदर्शिता । 'अमतं न मतेरमतस्तदिदम्' इत्यल्पमल्पं कणतो लेशत उक्तेरल्पकणोक्तिस्तथा प्रदर्शितेत्यर्थः । एवं तलवकारश्रुतिं प्रपञ्चयित्वेदानीं छान्दोग्यश्रुतिं प्रपञ्चयति— अणिमादिगुणमिति । 'स य

एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यादिश्रुतिप्रसिद्धमणिमादिगुणकं सूक्ष्मत्वसर्वगतत्वस्वयंप्रभत्वादिगुणकं सदिति प्रकृतम् 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोऽसृजत' इत्यादिना निखिलजगत्कारणत्वेन प्रकृतं प्रस्तुतं यद्ब्रह्म तदेव त्वमसीति श्रुतिरेकत्वमभ्यधाद्उपदिष्टवती 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति प्रवेशश्रवणात्स्वरूपं ब्रह्मैवात्मेत्यर्थः ॥ ३९ ॥

**नभसोऽवयवो विकृतिश्च यथा**
**घटिकादिनभो न भवेत्तु तथा ।**
**परमात्मन एष न चावयवो**
**विकृतिश्च शरीरभृदित्यमृषा ॥ ४० ॥**

श्रुतेः स्वतः प्रामाण्यात्तदवष्टम्भेन मया प्रत्यगात्मनो ब्रह्मत्वमभ्यधायि । तत्रेदमाशङ्क्यते— उक्तश्रुतिवृन्दस्यात्यन्ताभेदे तात्पर्यं नास्ति, किं त्वंशांशिभावगमकत्वं प्रकृतिविकृतिभावगमकत्वं चेति । तत्राह— नभस इति । घटिकादिनभो घटाद्याकाशो नभसोऽनवच्छिन्नाकाशस्यावयवो

विकृतिश्च यथा न भवेत्तथैष शरीरभृदपि जीवपदार्थोऽपि परमात्मनोऽवयवो विकृतिश्च न भवेदित्येषा बुद्धिर्मृषा न भवेत्, किं तु यथार्थेत्यर्थः ॥ ४० ॥

**करकादिनिमित्तकमेव यथा**
**करकाम्बरनाम भवेद्वियतः ।**
**परमात्मदृशोरपि नाम तथा**
**पुरहेतुकमेव तु जीव इति ॥ ४१ ॥**

यदि जीवपरयोरंशांशित्वादिलक्षणः कियानपि भेदो नास्ति तर्हि जीव इति नामभेदः कथमित्याशङ्कयाह—करकादीति । एकस्यापि वियतः करकादिनिमित्तकमेव घटाद्युपाधिनिबन्धनमेव यथा करकाम्बरमिति नाम भवेत्तथा परमात्मदृशोरपि दृग्रूपस्य परमात्मनोऽपि पुरहेतुकमेव शरीरहेतुकमेव जीव इति नामभेदो भवेत्, न वस्तुतो भेद इत्यर्थः ॥ ४१ ॥

**जनितं वियदम्बणि येन जग-**
**त्परमात्मसदक्षरनामभृता ।**

प्रविवेश स एव जगत्स्वकृतं
खमिवेह घटं घटसृष्टिमनु ॥ ४२ ॥

किं चाविकृतस्यैव ब्रह्मणः प्रवेशश्रवणाच्च न विकारोऽवयवो वा जीव इत्याह— जनितामिति । परमात्मसदक्षरनामभृता परमात्मेति सदित्यक्षरमिति च नाम बिभर्तीति परमात्मसदक्षरनामभृत्तेन परमात्मसदक्षरनामभृता येन वियद्ब्रह्मण्याकाशादिकं जगज्जनितं सृष्टं स परमात्मैव स्वकृतं स्वमायया निर्मितं जगज्जीवात्मना प्रविवेश प्राविशत् । निरंशस्य परमात्मनः कथं प्रवेश इत्यत्राह— खमिति । घटसृष्टिमनु यथा खमाकाशं घटं प्रविशति तद्वदित्यर्थः । निरवयवस्य सर्वगतस्यात्मनो बुद्ध्यादावभिव्यक्तिमात्रमेवात्मनः प्रवेशो न तु देवदत्तादेर्गृहादिप्रवेशवदिति भावः ॥

उदपद्यत खप्रमुखं हि जग-
त्परमात्मन इत्यपि याः श्रुतयः ।
अवधार्यत आभिरभेदमतिः
परमात्मसतत्त्वसमर्पणतः ॥ ४३ ॥

एवं तावत् 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' 'अन्तः प्रविष्टः शास्ता जनानाम्' इति प्रवेशवाक्याच्चतुर्विधेषु देहेष्वन्तःकरणसाक्षितया प्रविष्टस्य परमात्मन एव जीव इति नाम भवेद्यस्मात्तस्माज्जीवः परमात्मनोंऽशो विकारश्च न भवेदित्युक्तम्। इदानीमस्मिन्नर्थे सृष्टिवाक्यमपि प्रमाणमित्याह— उदितिं। परमात्मनः सकाशात्खप्रमुखं जगदुदपद्यतेत्यपि याः सृष्टिश्रुतयः 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिश्रुतिभिरप्यभेदमतिरेवावधार्यते। कथमवधार्यत इत्यत्राह— परमात्मसतत्त्वसमर्पणत इति। परमात्मकार्यस्य जगतस्तत्प्रविष्टस्य जीवस्यापि परमात्मसतत्त्वेन समर्पणतः परमात्मतः। तावन्मात्रप्रतिपादनेनाभेदमतिरेवावधार्यते प्रकाश्यते 'सर्वं खल्विदं ब्रह्म' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिभिरित्यर्थः ॥ ४३ ॥

**यदि सृष्टिविधानपरं वचनं**
**फलशून्यमनर्थकमेव भवेत्।**

**जगदित्थमजायत धातुरिति**
**श्रवणं पुरुषस्य फलाय न हि ॥**

ननु सृष्टिवाक्यं सृष्टिप्रतिपादनपरमेव नाभेदप्रतिपादनपरमपि, एकस्य वाक्यस्य नानार्थताया अन्याय्यत्वादित्याशङ्क्य विपक्षे दूषणमाह— यदीति । वचनं सृष्टिवाक्यं सृष्टिविधानपरं यदि तर्हि तद्वचनं फलशून्यमनर्थकमेव भवेत् । सृष्टिपरत्वे कथं फलशून्यत्वमित्यत्राह— जगदित्थमिति । धातुर्विधातुः परमेश्वराज्जगदित्थमजायतेति श्रवणमात्रं श्रोतुः पुरुषस्य फलायात्यन्तिकदुःखनिवृत्तये न भवेत् । हि यस्मादेवं तस्मात्सृष्टिप्रतिपादनपरत्वेऽशेषानर्थनिवृत्तिलक्षणफलाभावादानर्थक्यं प्रसज्येत 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात्, सृष्टिवाक्यस्य च स्वतः फलवत्त्वाश्रवणादेकत्वप्रतिपादकवाक्यस्य 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति परम्' 'न बिभेति कुतश्चन' इति फलवत्त्वश्रवणात्सृष्टिवाक्यमपि तत्त्वमसिवाक्यशेषभूतं चेत्फलवत्स्यादित्यर्थः ॥ ४४ ॥

**अनृतत्वमबाध्यसङ्कुद्विकृते-**
**र्निरधारि सदेव तु सत्यमिति ।**

श्रुतिभिर्बहुधैतदतोऽवगतं
जगतो न हि जन्म विधेयमिति ॥

इतश्च सृष्टिवाक्यस्य सृष्टिपरत्वमयुक्तमित्याह— अनृतत्वमिति । विकृतेर्विकारस्याप्यकृद्बहुवारमनृतत्वमवादि मिथ्यात्वमुक्तम् । किं च सदेव सत्यमिति निरधारि निर्धारितम् । अत्र प्रमाणमाह— श्रुतिभिरिति । 'वाचारम्भणं विकारो नामधेयम्' इत्यारभ्य 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादि श्रुतिभिर्बहुधा बहुप्रकारेण दृष्टान्तेन कार्यस्य जगतोऽनित्यत्वं कारणस्य ब्रह्मणः सत्यत्वं निर्धारितम् । तस्माज्जगतो जन्म न विधेयमित्येतदवगतमस्माभिरित्यर्थः ॥ ४५ ॥

न च तत्त्वमसीत्यसकृद्वचनं
जगतो जनिमात्रविधौ घटते ।
परमात्मपदानुमतिं तु यदा
जनयेत्पुरुषस्य तदा घटते ॥ ४६ ॥

सृष्टिवाक्यस्य मिथ्याभूतसृष्टिपरत्वमयुक्तं किं त्वेकत्वपरत्वमित्युक्तम् । इदानीं तत्त्वमसिवाक्यस्य सृष्टिपरत्वं

कस्मान्न भवेदित्यत्राह— न चेति । जगतो जनिमात्रविधौ तत्त्वमसिवाक्यस्य जन्ममात्रप्रतिपादनपरत्वेऽपि फलवज्ज्ञानस्य जनकत्वाभावात्तत्त्वमसीत्यसकृद्वचनं पुनः पुनरसकृदभ्यासो न घटते, अविवक्षितार्थस्यासकृदभ्यासासंभवात् । अयं भावः— 'संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इति न्यायात्सृष्टिवाक्यस्य महावाक्येनैकवाक्यत्वे संभवति सति तद्विपर्यासेन महावाक्यस्य सृष्टिवाक्यशेषत्वं न घटते नैरर्थक्यप्रसङ्गादिति । ननु तत्त्वमसिवाक्यस्य सृष्टिपरत्वं यथा न घटते तथा सृष्टिवाक्यस्य तत्त्वमसिवाक्यशेषत्वमपि न घटत इत्यत्राह— परमात्मेति । पुरुषस्य प्रत्यगात्मनः परमात्मपदानुमतिं ब्रह्मत्वबुद्धिं यदा जनयेन्महावाक्यं तदा वाक्यजनितज्ञानस्य मोक्षफलत्वात्तच्छेषतया सृष्टिवाक्यमपि घटते, विपरीतं चेन्न घटेतेत्यर्थः ॥ ४६ ॥

**स्थिरजङ्गमदेहधियां चरितं**
**परिपश्यति योऽविकृतः पुरुषः ।**
**परमात्मसदुक्तिरसाविति य-**
**द्भणितं तदतिष्ठिपमित्थमहम् ॥४७॥**

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इत्यादिसृष्टिस्थितिप्रलयप्रवेशनियमादेषां पञ्चविधार्थवादवाक्यानामभेद एव तात्पर्यमिति दर्शयित्वेशनाविरोधं निगमयति— स्थिरेति । स्थिरजङ्गमदेहधियां चरितं जीवात्मनां या बुद्धिवृत्तयस्ता यः पुरुषोऽविकृतः सन्परिपश्यति, असौ पुरुषः स्वयमेव परमात्मसदुक्तिरिति यत्पूर्वं मया भणितं तदित्थंप्रकारेणाहमातिष्ठिप प्रमाणविरोधपरिहारेण प्रतिष्ठापितवानस्मीत्यर्थः ॥ ४७ ॥

**पृथगेव यदाक्षरतो मतिवि-**
**न्मकरोदकवन्न घटाम्बरवत् ।**
**न विरोत्स्यति तत्त्वमसीति तदा**
**वचनं कथमेष त इत्यपि च ॥ ४८ ॥**

यथा तत्त्वमसिवाक्यं जीवब्रह्मणोरंशांशित्वलक्षणमीषद्भेदमपि न सहते तथा मकरोदकवदत्यन्तभेदं सुतरामेव न सहत इत्याह— पृथगिति । यदा मतिविद्बुद्धिसाक्षी

मकरोदकवन्मत्स्योदकयोरिवाक्षरतो ब्रह्मणः सकाशात्पृथगेव भिन्न एव न तु घटाम्बरवद्यथा घटाकाशस्य महाकाशादुपाधिकृतो भेदो यदा नाङ्गीक्रियते तदा तत्त्वमसीति वचनं कथं न विरोत्स्यति ? जीवपरयोर्मत्स्योदकवत्परमार्थभेदाङ्गीकारे तत्त्वमसिवाक्यविरोधः स्यादित्यर्थः ॥ ४८ ॥

न तु वस्तुसतत्त्वविबोधनकृ-
द्विनिवर्तयदप्रतिबोधमिदम् ।
तदुपासनकर्मविधानपरं
यत एवमतो न विरोत्स्यति मे ॥

ननु वस्तुपरत्वे सति भेदं न सहते तत्त्वमस्यादिवाक्यम् ; तस्य वस्तुपरत्वं नास्ति किं तूपासनापरत्वमित्याशङ्कते पूर्ववादी— न त्विति । अप्रबोधमज्ञानं विनिवर्तयदिदं तत्त्वमस्यादिवाक्यं न वस्तुसतत्त्वविबोधनकृत् न तु वस्तुस्वरूपप्रतिपादनपरम् । तर्हि किंपरमित्यत्राह— तदुपासनकर्मविधानपरम् । यत एवमतः कारणात्तत्त्वमस्यादिवाक्यं न विरोत्स्यति, वाक्यस्योपासनाविधानपरत्वादस्य-

ण्डैकरसवस्तुपरत्वाभावात्तद्वाक्यमस्मन्मतं प्रतिक्षेप्तुं न क्षमत इति भावः ॥ ४९ ॥

मनआदिषु कारणदृष्टिविधिः
प्रतिमासु च देवधियां करणम् ।
स्वमतिं ह्यनपोह्य यथा तु तथा
त्वमसीह सदात्ममतिर्वचनात् ॥

वाक्यस्योपासनाविधिपरत्वं दृष्टान्तेन साधयति— **मन-इति** । 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्युपासीत' 'आकाशो ब्रह्मेत्युपासीत' 'अन्नं ब्रह्मेत्युपासीत' इत्यादिश्रुत्या मनआदिषु कारणदृष्टिविधिः मनआदित्यादौ कारणब्रह्मोपास्तिर्विधीयते । तथा च प्रतिमासु भगवल्लाञ्छनलाञ्छितासु स्वमतिमनपोह्याधिष्ठानबुद्धिमपरित्यज्य देवधियां करणं देवत्वबुद्ध्यारोपणं तद्वदत्रापि बुद्धिस्त्वमसीति वचनात्तत्त्वमसिवाक्येन इह त्वंपदार्थभूते जीवे जीवत्वमपरित्यज्य सदात्ममतिर्विधीयते सद्रूपब्रह्मदृष्टिर्विधीयते । एकत्वपरत्वे प्रमाणान्तरविरोधात्सदहमस्मीति चेतोधारणमेव विधीयत इत्यर्थः ॥ ५० ॥

**अथ वा त्वमिति ध्वनिवाच्यमिदं**
**सदसीति वदेद्वचनं गुणतः ।**
**विभयं पुरुषं प्रवदन्ति यथा**
**मृगराडयमीश्वरगुप्त इति ॥ ५१ ॥**

तत्त्वमसिवाक्यमुपासनाविधिपरमित्येकं पक्षं प्रदर्श्य, इदानीं गुणवादपरमथ वा स्तुतिपरमथ वा विपरीतबोधकमिति पक्षान्तराण्युदाहरति पूर्ववादी श्लोकद्वयेन— **अथ वेति** । इदं तत्त्वमसीति वचनं त्वमिति ध्वनिवाच्यं जीवं गुणतो गुणवादेन सदसीति वदेत् । गुणवादपरत्वे दृष्टान्तमाह— विभयमिति । विभयं निर्भयं पुरुषं दृष्ट्वा अयमीश्वरगुप्तो मृगराडयं देवदत्तः सिंह इति प्रवदन्ति, तद्वदित्यर्थः ॥

**यदि वा स्तुतये सदसीति वदे-**
**न्मघवानसि विष्णुरसीति यथा ।**
**त्वमिति श्रुतिवाच्यमतत्त्वकता-**
**मथ वा सत एव वदेद्वचनम् ॥**

स्तुतिपरत्वं दर्शयति— यदीति । यथा दातारं पुरुषं मघवानिन्द्रोऽसि विष्णुरसीति स्तुवन्ति याचकास्तथात्रापि तं स्तुवये स्तुत्यर्थं जीवं स्तोतुं सदसीति वदेद्वाक्यमित्यर्थः । विपरीतबोधकत्वं दर्शयति— त्वमिति । अथ वा तत्त्वमसीति वचनं सतः सद्रूपस्य ब्रह्मणस्त्वमिति ध्वनिवाच्यसत्त्वकतामेव त्वंपदवाच्यजीवात्मकतामेव वदेत् । ब्रह्मणो जीवत्वमेव बोधयेद्वाक्यमित्यर्थः ॥ ५२ ॥

**यदि तत्त्वमिति ध्वनिनाभिहितः**
**परमात्मसतत्त्वक एव सदा ।**
**किमिति स्वकमेष न रूपमवे-**
**त्प्रतिबोध्यत एव यतो वचनैः ॥**

ननु किमनया क्लिष्टकल्पनया, स्वाभाविकं जीवस्य ब्रह्मत्वमेव किमिति न बोधयेद्वाक्यमित्यत्राह— यदीति । तत्त्वमसिवाक्ये त्वमिति ध्वनिनाभिहितो जीवः सदा परमात्मसतत्त्वक एव यदि, तर्ह्येष जीवः स्वरूपं किमिति नावेत् स्वस्य स्वाभाविकं ब्रह्मत्वं किं न जानाति? न तु

स्वारसिकं ब्रह्मत्वं किं तु वचनैः प्रतिबोध्यत एवेति, यत-
स्त्वतः कारणादस्य ब्रह्मत्वं स्वारसिकं न भवतीत्यर्थः ॥५३॥

अत एव हि जीवसदात्मकतां
न हि तत्त्वमसीति वदेद्वचनम् ।
यदपीदृशमन्यदतो वचनं
तदपि प्रथयेदनयैव दिशा ॥ ५४ ॥

उक्तमर्थं निगमयति पूर्ववादी— अत इति । अत एव वाक्यस्योपासनापरत्वादेव तत्त्वमसीति वचनं जीवस्य सदात्मकतां न वदेद्ब्रह्मत्वं न बोधयेत् । हि यस्मादेवं तस्मादतोऽन्यदपीदृशं यद्वचनं महावाक्यं तदप्यनयैव दिशा प्रथयेद्बुध्येदित्यर्थः ॥ ५४ ॥

त्वदुदाहृतवाक्यविलक्षणता
वचनस्य हि तत्त्वमसीति यतः ।
अत एव न दृष्टिविधानपरं
सत एव सदात्मकतागमकम् ॥५५॥

तत्त्वमसिवाक्यस्योपासनवाक्यवैलक्षण्याद्वस्तुपरत्वमेवेति साधनायाह सिद्धान्ती— त्वदिति । तत्त्वमसीति वचनस्य त्वदुदाहृतवाक्यविलक्षणता त्वयोदाहृतान्मनो ब्रह्मेत्यादिवाक्याद्विलक्षणतास्ति यतस्ततः कारणादिदं वचनं दृष्टिविधानपरमुपासनाविधिपरं न भवेत्, किं तर्हि सत एव सदात्मकतागमकं जीवात्मना प्रविष्टस्य सत एव ब्रह्मण एव सदात्मकतागमकं ब्रह्मत्वबोधकमित्यर्थः ॥ ५५ ॥

इतिशब्दशिरस्कपदोक्तमति-
विहिता मनआदिषु तैर्वचनैः ।
न विधानमिहास्ति तथा वचने
सुविलक्षणमेतदतो वचनात् ॥ ५६ ॥

तत्त्वमसिवाक्यस्योपासनवाक्याद्वैलक्षण्यं साधयति— इतीति । इतिशब्दशिरस्कपदोक्तमतिर्विहिता मनआदिषु मनआदित्यादिषु तैर्वचनैर्मनो ब्रह्मेत्यादिभिर्वाक्यैर्विहिता । इह वचने तु तथा विधानं नास्ति, अस्मिंस्तत्त्वमसिवाक्ये तथाविधेतिशब्दशिरस्कपदेनोक्तदृष्टिविधानं नास्तीति

यस्मात्तस्मादतो वचनान्मनो ब्रह्मेत्यादिवाक्यादेतत्तत्त्वमसि-वाक्यं सुविलक्षणं सुतरां विलक्षणमित्यर्थः ॥ ५६ ॥

**मनसो वियतः सवितृप्रभृतेः**
**प्रवदन्ति न तानि सदात्मकताम् ।**
**मनआदि हि मुख्यमुपास्यतया**
**प्रवदन्ति यतोऽक्षरदृष्टियुतम् ॥ ५७॥**

यद्युपासनावाक्यवैलक्षण्यात्तत्त्वमसिवाक्यं वस्तुनिष्ठं तर्हि मनो ब्रह्मेत्यादीन्यपि वस्तुनिष्ठान्येवेत्यत्राह— मनस इति । सवितृप्रभृतेः सवितारमारभ्य मनसो वियतश्च तानि मनो ब्रह्मेत्यादीनि सदात्मकतां सद्रूपब्रह्मात्मकतां न प्रवदन्ति मनआदेर्ब्रह्मात्मकतां न प्रवदन्ति न बोधयन्ति । तर्हि किं कुर्वन्तीत्यत्राह— मनआदीति । मुख्यतया मनआदित्यादिकमक्षरदृष्टियुतमुपास्यतया प्रवदन्ति फलान्तरमुद्दिश्येत्यर्थः ॥ ५७ ॥

**करको न मृदः पृथगस्ति यथा**
**मनआदि सतोऽस्ति तथा न पृथक् ।**

इति वस्तुसतत्त्वकता तु यदा
विधिशब्द इतिश्च तदा तु वृथा ॥

ननु ब्रह्ममनसोः प्रकृतिविकृतिभावान्मृत्करकयोरिव तादात्म्योपदेशो वस्तुपर एव कस्मान्न भवतीत्याशङ्क्याह—करक इति । यथा करको घटादिकं कार्यं स्वकारणान्मृदः सकाशात्पृथङ् नास्ति तथा मनआदित्यादिकमपि कारणभूतात्सतो ब्रह्मणः सकाशात्पृथग्व्यतिरिक्ततया नास्तीत्येवं वस्तुसतत्त्वकता तु वस्तुपरता तु यदा त्वयाभ्युपगम्यते तदा मनो ब्रह्मेत्युपासीतेत्यस्मिन्वाक्ये विधिशब्दश्चेतिशब्दश्च वृथा भवेत् । तस्मान्मनो ब्रह्मेत्यादिवाक्यस्य वस्तुपरत्वमयुक्तम्, किं तूपासनापरत्वमेवेत्यर्थः ॥ ५८ ॥

मनआदि समानविभक्तितया
विधिशब्दमितिं च विहाय यदि ।
जनकेन सता सह योगमिया-
दनृतं तदिति स्फुटमुक्तमभूत् ॥

तत्र विधिशब्दमितिशब्दं च विहाय मनो ब्रह्मेत्यादि-

पदद्वयं समानविभक्तिकतया सामानाधिकरण्यं गमिष्यति, सतश्च वस्तुपरमेवेति, तत्राह— मनइति । समानविभक्तिः सत्येकविभक्तितया मनआदित्यादिकं विधिशब्दमितिशब्दं च विहाय जनकेन सता स्वकारणेन ब्रह्मणा सह योगमियात् सामानाधिकरण्यं गच्छेद्यदि तर्हि तन्मनआदि अनृतमसत्यमिति स्फुटं त्वयोक्तमभूत् इदानीं मनआदिजगन्मिथ्यैवेति तव सिद्धान्तः स्यात् । तदयुक्तं तवापसिद्धान्तप्रसङ्गादित्यर्थः । जडाजडयोर्वास्तवतादात्म्यायोगादिति भावः ॥ ५९ ॥

ननु जीवसतोरपि तत्त्वमिति
स्फुटमेकविभक्त्यभिधानमिदम् ।
कथमस्य शरीरभृतोऽनृतता
न भवेदविभक्तविभक्तियुजः ॥ ६० ॥

ननु ब्रह्मसामानाधिकरण्ये यदि मनआदेरनृतत्वं भवेत्, तर्हि जीवस्यापि तत्त्वमसिवाक्ये ब्रह्मसामानाधिकरण्यश्रवणादनृतत्वं कथं न भवेदिति पूर्वपक्षी चोदयति— नन्विति । जीवसतोरपि तत्त्वमित्येकविभक्त्यभिधानमभिन्नविभक्त्यभिधानं स्फुटं प्रतीयते, ततः कारणादविभक्तविभ-

क्तियुजोऽभिन्नविभक्तियुक्तस्यास्य शरीरभृतो जीवस्य मनआ-दिवदनृतता कथं न भवेत् मिथ्यात्वं भवत्येव। तस्य जीवस्यानृतत्वे तस्याविक्रियब्रह्मात्मकत्वं श्रुतिसिद्धं न से-त्स्यतीत्यर्थः ॥ ६० ॥

प्रकृतेरभिधानपदेन यदा
विकृतेरभिधानमुपैति युजाम्।
अनृतत्वमतिस्तु तदा विकृतौ
मृदयं घट इत्यभिधासु यथा ॥ ६१ ॥

न ब्रह्मसामानाधिकरण्यमनृतत्वप्रयोजकमित्याह सिद्धा-न्ती— प्रकृतेरिति। यदा प्रकृतेरभिधानपदेन कारण-बोधकपदेन विकृतेरभिधानं कार्यवाचकं पदं युजामुपैति सामानाधिकरण्यं प्राप्नोति तदा विकृतावनृतत्वमतिर्भवति कार्ये मिथ्यात्वबुद्धिर्भवति। तत्र दृष्टान्तमाह— मृदयं घट इत्यभिधासु यथेति। मृदयं घटस्तन्तुरयं पटः कनकमिदं रुचकमिति कार्यकारणपदयोः सामानाधिकरण्ये कार्येऽनृत-त्वमतिर्भवति, तद्वदत्रापि यदि जीवपरयोः कार्यकारणभा-

वस्तर्हि अनृतत्वं भवेदेव, न तु तदस्तीति सिद्धान्तिनोऽभिप्रायः ॥ ६१ ॥

विकृतित्वमवादि मनःप्रभृते-
र्बहुशः श्रुतिषु प्रकृतेस्तु सतः ।
अत एव समानविभक्तितया
मनआदि सुवेद्यमसत्यमिति ॥ ६२ ॥

ननु कार्यकारणयोः सामानाधिकरण्ये कार्येऽनृतत्वमस्तु भवतु, मनआदेस्तु सृष्टिप्रकरणे कार्यत्वाश्रवणादनृतत्वं न भवेदित्याशङ्क्य मैवं तव बाधियादित्याह सिद्धान्ती— विकृतत्वमिति । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' 'अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इत्यादिश्रुतिषु मनःप्रभृतेर्मनःप्रमुखस्य जगतो बहुशो बहुवारं सतः प्रकृतेर्विकृतित्वमवादि मनसः सद्रूपब्रह्मकार्यत्वमभाणि । यत एवमतः कारणात्समानविभक्तितया मनआद्यसत्यमिति सुवेद्यम् । मनआदेः कार्यत्वश्रवणाद्ब्रह्मसामानाधिकरण्ये मनआद्यनृतं भवेदित्यर्थः ॥ ६२ ॥

जनितत्वमवादि न हि श्रुतिभि-
र्जनकेन सतास्य शरीरभृतः ।
मनआदिविकारविलक्षणतां
प्रतियन्ति शरीरभृतस्तु ततः ॥६३॥

तर्हि जीवस्यापि मनआदिवद्ब्रह्मकार्यत्वश्रवणादनृतत्वं कुतो न भवेत्, 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येव-मेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वे वेदाः सर्वाणि भूतानि सर्व एत आत्मनो व्युच्चरन्ति' इति जीवोत्पत्तिश्रवणादित्याशङ्क्य, जीवस्य स्वरूपोत्पत्तिर्न भव-ति किं तु विशिष्टोत्पत्तिरेवेत्यभिप्रायेणाह सिद्धान्ती— ज-नितत्वमिति । अस्य शरीरभृतः शरीरोपाधिकस्य जीवा-त्मनो जनकेन सता निखिलजगत्कारणेन ब्रह्मणा जनि-तत्वमुत्पादितत्वं श्रुतिभिर्नावादि न गदितम् । हि यस्मादेवं ततः कारणाच्छरीरभृतो मनआदिविकारविलक्षणतां मन-आदिकार्यवैलक्षण्यं विद्वज्जनाः प्रतियन्ति जानन्ति । तस्मा-न्मनआदिवज्जीवस्य ब्रह्मसामानाधिकरण्येऽनृतत्वं न भवे-दित्यर्थः ॥ ६३ ॥

यदजीजनदम्बरपूर्वमिदं
जगदक्षरमीक्षणविग्रहकम् ।
प्रविवेश तदेव जगत्स्वकृतं
स च जीवसमाख्य इति श्रुतयः ॥

जीवस्य ब्रह्मविकारत्वं श्रुतिषु प्रसिद्धं न चेत्किमात्मकत्वं तर्हि प्रसिद्धमित्यपेक्षायाम् ; अविकृतब्रह्मात्मकत्वमेवेत्याह सिद्धान्ती— यदजीजनदिति । 'तदैक्षत तत्तेजोऽसृत' 'स ईक्षांचक्रे' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'प्रज्ञानं ब्रह्म' इति श्रुतेरीक्षणविग्रहकं यदक्षरात्मकं ब्रह्माम्बरपूर्वकमाकाशपुरःसरकमिदं जगदजीजनदुदपादयत तदेवाक्षरात्मकं ब्रह्मैव स्वकृतं जगत्प्रविवेश प्राविशत् । यस्मादेवं तस्मात्स परमात्मैव जीवसमाख्यो जीवसंज्ञां प्राप्त इति 'तत्सृष्ट्वा तदेवानुप्राविशत' इत्याद्याः श्रुतयः प्रवदन्तीत्यर्थः ॥

परमात्मविकारविभक्तमतिर्न भवत्यत एव शरीरभृतः ।

यत एव विकारविभिन्नमति-
र्न भवत्यत एव मृषात्वमतिः ॥ ६५ ॥

अविभक्तविभक्त्यभिधानकृता
परमात्मपदेन शरीरभृतः ।
न भवेदिह तत्त्वमसिप्रभृतौ
लवणं जलमित्यभिधासु यथा ॥६६॥

एवं श्रुतिप्रामाण्याज्जीवस्याविकृतब्रह्मात्मत्वे सिद्धे प्रकृते किमायातमित्यपेक्षायाम् , जीव एव परमात्मेत्यनेन हेतुना विभक्तबुद्धिर्न भवेदित्यायातमित्याह— परमेति । विकारविभक्तमतिर्न भवति परमात्मविकारत्वेन ब्रह्मकार्यत्वेन हेतुना ब्रह्मणः सकाशाज्जीवो विभक्त इति बुद्धिर्न भवति जीवस्य ब्रह्मकार्यत्वाभावादित्यर्थः । ततः किं तव सिद्धमित्यत्राह— यत एवेति सार्धश्लोकेन । यत एव विकारत्वेन विभिन्नमतिर्न भवति, अत एवेह तत्त्वमसिप्रभृतौ तत्त्वमस्यादिवाक्ये शरीरभृतः परमात्मपदेन अविभक्तविभक्त्यभिधानकृता मृषात्मबुद्धिर्न भवेत् , ब्रह्मसामानाधिकरण्ये

सति जीवेऽनृतत्वबुद्धिर्न भवेत् । अत्र व्यतिरेकदृष्टान्त-माह— लवणं जलमित्यभिधासु यथेति । यथा लवण-जलयोः कार्यकारणभावादुदककार्यस्य लवणस्यानृतत्वं भवे-त्तथा जीवस्यानृतत्वं न भवेत् , जीवब्रह्मणोः कार्यकारण-त्वाभावादित्यर्थः ॥ ६५ ॥ ६६ ॥

परमात्मविकारनिराकरणं
कृतमस्य शरीरभृतस्तु यतः ।
परमेश्वररूपविलक्षणता
न मनागपि देहभृतोऽस्ति ततः ॥

ब्रह्मसामानाधिकरण्ये मृषात्वं न भवतीति साधयितुं जीवस्य विकारत्वं निराकृतम् , अत एव जीवस्य सर्वप्रकारेण ब्रह्मविलक्षणता निराकृतेत्याह सिद्धान्ती— **परमात्मेति** । अस्य शरीरभृतः परमात्मविकारत्वनिराकरणं कृतमिति यतः, अत एवास्य शरीरभृतो जीवपदार्थस्य परमेश्वररूप-विलक्षणता न मनागपीषदपि नास्ति जीवस्याविकृतब्रह्मात्म-त्वश्रवणादित्यर्थः ॥ ६७ ॥

ननु जीवसतोरणुमात्रमपि
स्वगतं न विशेषणमस्ति यदा ।
वद तत्त्वमसीति तदा वचनं
किमु वक्ति तथैष त इत्यपि च ॥

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' 'नेह नानास्ति किंचन' इति भेदस्य निरस्तत्वाज्जीवपरयोरीषदपि भेदो नास्तीत्युपश्रुत्य पूर्वपक्षवादी चोदयति— नन्विति । जीवपरयोरणुमात्रमपि स्वगतं विशेषणं भेदकं यदा नास्ति तदा तत्त्वमसीति वचनं किमु वक्ति किं बोधयति । एष त इत्यपि च 'एष त आत्मान्तर्याम्यमृतः' इति वचनं च किमु वक्ति जीवसतोरीषदपि भेदाभावे पूर्वमेवाभेदस्य सिद्धत्वादुपदेशानर्थक्यमिति पूर्ववादिनोऽभिप्रायः ॥ ६८ ॥

स्वगतं यदि भेदकमिष्टमभू-
दणुमात्रमपीश्वरदेहभृतोः ।

**अपनेतुमशक्यमदो वचनै-**
**रमुनास्य पृथक्त्वनिषेधपरैः ॥ ६९ ॥**

एतच्चोद्यं परिहरति सिद्धान्ती—स्वगतमिति । ईश्वरस्येह-भूतोरणुमात्रमपीश्वरमतं भेदकमिष्टमभूद्यदि जीवपरयोः पर-मार्थतः स्वगतभेद इष्यते यदि तर्ह्यदो भेदकममुना परमा-त्मनास्य जीवस्य पृथक्त्वनिषेधपरैस्तत्त्वमस्यादिभिर्वाक्यै-रपनेतुं निराकर्तुमशक्यमिति ॥ ६९ ॥

**इह यस्य च यो गुण आत्मगतः**
**स्वत एव न जातु भवेत्परतः ।**
**वचनेन न तस्य निराकरणं**
**क्रियते स गुणः सहजस्तु यतः ॥**

जीवपरयोः परमार्थभेदाङ्गीकारे तस्य वचनेन निराक-रणमशक्यमित्युक्तम् । इदानीं परमार्थभेदनिराकरणासंभवं साधयति— इहेत्यादिना । इह व्यवहारदशायां यस्य पदा-र्थस्य यो गुणः स्वत एवात्मगतो जातु परतो न भवेत्तस्य स्वा-भाविकगुणस्य वचनेन निराकरणं न क्रियते, निराकर्तुं न

शक्यत इत्यर्थः । कुतो न शक्यत इत्याकाङ्क्षायां तत्र हेतुं कथयति— सहज इति । तु पुनः स भेदाख्यो गुणः सहजो यतः उपाधिकृतो न भवेद्यतस्ततः कारणाद्वचनेन न निराक्रियत इत्यर्थः ॥ ७० ॥

**वचनं त्ववबोधकमेव यत-**
**स्तत एव न वस्तुविपर्ययकृत् ।**
**न हि वस्त्वपि शब्दवशात्प्रकृतिं**
**प्रजहात्यनवस्थितिदोषभयात् ॥ ७१ ॥**

ननु वचनेन किमिति सहजगुणनिराकरणं न संभवति वचनस्य कारणत्वादित्यत्राह— वचनमिति । अज्ञातार्थाधिगन्तृतया प्रमाणभूतं तत्त्वमस्यादिवचनमवबोधकमेव, प्रमाणानामभिव्यञ्जकत्वस्वाभाव्यात् , अतो यथावस्थितप्रत्यग्ब्रह्मैकत्वबोधकमेव, न तु कारणमित्यर्थः । तर्हि वस्तु स्वयमेव शब्दसामर्थ्यात्स्वभावसिद्धं गुणं परित्यजत्विति चेन्नेत्याह— न हीति । वस्त्वपि शब्दवशाच्छ्रुतिसामर्थ्यात्प्रकृतिं प्रकृतिसिद्धं गुणभेदं न जहाति न परित्यजति । कुतः कारणादित्यत्राह— अनवस्थितिदोषभयादित्यादिना । स्वस्यान-

वस्थानदोषभयात्सहजस्य निराकरणे स्वस्यापि नाशप्रसङ्गा- दित्यर्थः। तथोक्तं सुरेश्वराचार्यैः— 'न हि स्वभावो भावा- नां व्यावर्त्येतौष्ण्यवद्रवेः। स्वभावाद्धि निवृत्तोऽर्थो निः- स्वभावः खपुष्पवत् ॥' इति। तस्माद्भेदस्य सहजत्वे तस्य निवृत्तिर्न संभवतीत्यर्थः ॥ ७१ ॥

**यत एवमतो विषयस्य गुणं**
**विषयेण सहात्मनि मूढधिया।**
**अधिरोपितमप्स्विव भूमिगुणं**
**प्रतिषेधति तत्त्वमसीति वचः ॥७२॥**

भेदस्यौपाधिकत्वे तस्य वचनेन निवृत्तिः संभवतीति दर्शयति— यत इति। स्वाभाविकभेदस्य निवृत्तिर्न संभ- वतीति यतस्ततः कारणान्मूढधियाविवेकिनात्मनि स्वस्मिन्वि- षयस्य गुणं विषयेण सहारोपितमध्यस्तमेतद्धर्मं तत्त्वमसीति वचः प्रतिषेधति निरस्यति। आरोपितस्य निषेध्यत्वे दृष्टान्तं दर्शयति— अप्स्विव भूमिगुणमिति। भूमिगुणं गन्धमप्स्वारोपितं यथा प्रतिषेधति वचः पृथिव्या एव गन्धवत्त्वात्तद्वदत्राप्यस्मिन् 'तत्त्वमसि' 'अहं ब्रह्मास्मि'

'अस्थूलमनण्वह्रस्वमशब्दमस्पर्शम्' इत्यादिकं वचनमात्मन्य-विवेकेनारोपितातद्धर्मनिषेधमुखेनाखण्डैकवस्तुपरमित्यर्थः ॥

अत एव न दृष्टिविधानपरं
गुणवादपरं च न तद्वचनम् ।
स्तुतिवाद्यपि नैतदुपास्यतया
विधिरत्र न देहभृतोऽस्ति यतः ॥

यस्मादेवं वाक्यस्य वस्तुपरत्वं सिद्धं तस्मादुपासनापरत्वं नास्तीति सिद्धमित्याह— अत एवेति । अत एव वाक्यस्याखण्डवस्तुपरत्वादेव तद्वाक्यं न दृष्टिविधानपरं न तूपासनाविधिपरमुपासनाविधिषु न भवेत् । उपासनाविधिपरत्वाभावे हेतुमाह— उपास्यतयेति । अत्रास्मिस्तत्त्वमसिवाक्ये देहभृतो जीवस्य ब्रह्मत्वेनोपास्यतया विधिर्नास्ति लिङ्लोडादिपदं नास्ति यतस्ततः कारणादुपासनापरं तथा गुणवादपरं च न भवेत् । मघवानसि विष्णुरसीत्यादिवत्स्तुतिवाद्यपि न भवेत्स्तुतिपरं च न भवेत्, मुख्यार्थसंभवे गौणार्थकल्पनाया अनुचितत्वादित्यर्थः ॥ ७३ ॥

सत एव हि नाम जगत्प्रकृते-
रुपधानवशादिह जीव इति ।
अत एव न जीवसतत्त्वकतां
प्रकृतस्य सतः प्रतिपादयति ॥७४॥

एवं च सति विपरीतबोधकत्वं च नास्तीत्याह— सत इति । जगत्प्रकृतेः सत एव जगत्कारणस्य ब्रह्मण एवोपधानवशाच्छरीरद्वयोपाधिवशाज्जीव इति नाम भवतीति यतोऽत एव प्रकृतस्य सतः 'सदेव सोम्येदमग्र आसीत्' इति जगत्कारणत्वेन प्रस्तुतस्य सतो ब्रह्मणो जीवसतत्त्वकतां जीवरूपतां न प्रतिपादयति । किं तर्हि जीवसंज्ञां प्राप्तस्य ब्रह्मणः स्वारसिकं ब्रह्मत्वमवबोधयतीत्यर्थः ॥ ७४ ॥

यदि जीवसतत्त्वकतां गमये-
दणिमादिगुणस्य जगत्प्रकृतेः ।
अणिमादिगुणोक्तिरतोऽस्य मृषा
यदि वास्य शरीरभृदात्मकता ॥७५॥

वक्ष्यमाणहेतोश्च वाक्यस्य विपरीतबोधकता नास्ती-त्याह— यदीति । अणिमादिगुणस्य जगत्प्रकृतेः सूक्ष्म-त्वादिगुणकस्य ब्रह्मणो जीवसतत्त्वकतामेव वाक्यं गम-येद्यदि तर्ह्यस्य ब्रह्मणः अतो वाक्यात् ‘स य एषोऽणि-मैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा’ इत्यादिकाद्वाक्या-दणिमादिगुणोक्तिर्ब्रह्मणो मृषा स्यादपारमार्थिकी स्यात् । यदि वाणिमादिगुणोक्तिस्त्वभिहिता तर्ह्यस्य ब्रह्मणः शरी-रभृदात्मकता जीवसतत्त्वकता मृषा भवेत् । तस्मात्प्रकृतस्य सतो जीवसतत्त्वकतां न प्रतिपादयतीत्यर्थः ॥ ७५ ॥

**न च संसृतिहेतुनिराकरणं**
**कृतमस्य शरीरभृतोऽभिमतम् ।**
**परमेश्वरमात्मतया ब्रुवता**
**वचनेन च तत्त्वमसीत्यमुना ॥ ७६ ॥**

इतोऽपि विपरीतबोधकत्वं नास्तीत्याह— न चेति । परमेश्वरं परमात्मानमात्मतया जीवतया ब्रुवता तत्त्वम-सीत्यमुना वचनेनास्य शरीरभृतोऽभिमतमिष्टं संसृतिहेतु-निराकरणं संसारहेतोरज्ञानस्य निराकरणं न कृतमिति यस्मात्तस्माद्विपरीतबोधकत्वमयुक्तमित्यर्थः ॥ ७६ ॥

त्वमसीति पदद्वयमेति युजां
तदिति ध्वनिना सह तत्त्वमिति ।
क्रियया सह नामपदं समिया-
न्निरपेक्षमुपैत्यनया हि युजाम् ॥

वाक्यस्थपदसंबन्धपर्यालोचनया वा विपरीतबोधकत्वं न संभवतीत्याह— त्वमिति । प्रथमं त्वमसीति पदद्वयं परस्परं युजामेति पश्चात्तदेव पदद्वयं तदिति ध्वनिना सह युजामेति तत्पदलक्ष्यं वस्तु त्वमसीति । कुतः कारणादेवं क्रमेण वाक्यस्थपदानां संबन्ध इत्याह— क्रिययेति । नामपदं सुबन्तं पदं क्रियया सह युजां योगं समियात्प्राप्नुयात् । तदपि किंनिबन्धनमित्यत्राह— निरपेक्षमिति । अनयासीत्यादिकक्रियया निरपेक्षं यथा भवति तथा वाक्यं युजामुपैति । 'साकाङ्क्षं वचनमनर्थकम्' इति न्यायात्क्रियापदे सति वाक्यं निरपेक्षं भवेदित्यर्थः ॥ ७७ ॥

न हि नामसहस्रमपि क्रियया
रहितं किमपि प्रतिपादयति ।

प्रतिपादकमेषु लिङादि भवे-
द्विहितादिमतेर्जनकं हि यतः ॥७८॥

क्रियापदयुक्ते वाक्ये नामपदानां नैराकाङ्क्ष्यमित्येतत्साधयति— न हीति । क्रियया रहितं चेद्वाक्यं तर्हि नामसहस्रमपि अनेकमपि सुबन्तपदं किमपि न प्रतिपादयति कंचिदर्थमपि बोधयितुं न पर्याप्तमित्यर्थः । तर्हि किं प्रतिपादकमित्यत्राह— प्रतिपादकमिति । एषु वाक्यस्थपदेषु वाक्यस्थानां पदानां मध्ये लिङादि लिङ्लोट्तव्यादिकमस्यस्मीत्यादिकं वा क्रियापदं कस्यचिदर्थस्य प्रतिपादकं भवेत् । तदपि कथमित्यत्राह— विहितादिमतेर्जनकं हि यत इति । विहितज्ञानस्य प्रतिषिद्धज्ञानस्य च विधिनिषेधगोचरवस्तुविषयज्ञानस्यापि जनकं हि यस्मादेवं तस्माद्वाक्यस्थपदानां संबन्धक्रमपर्यालोचनया विपरीतबोधकत्वं न संभवतीत्यर्थः ॥

भगवानपि मध्यममेव यतो
विनियच्छति युष्मदि नित्यमतः ।
प्रथमं त्वमसीति पदे समित-
श्चरमं त्वसिना समियात्तदिति ॥

प्रथमं त्वमसीति पदद्वयं परस्परं युजामुपैतीत्यस्मिन्नर्थे पाणिनीयं सूत्रमुपोद्बलयति— भगवानिति । पाणिनिर्भगवानपि मध्यममसिभवसीत्यादिकं मध्यमपदं नित्यं नियमेन युष्मद्येव विनियच्छति 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्यनेन सूत्रेणासिभवसीत्यादिकं मध्यमपुरुषं तिङन्तं पदं युष्मद्येव त्वंपदस्योपर्येव नियच्छति । यस्मादेवं तस्मात्प्रथमं त्वमसीति पदे परस्परं समितः परस्परं संयोगं प्राप्नुतः चरमं पश्चादसिनासिपदेन तदिति पदं च समियात्संयोगं प्राप्नुयादित्यर्थः ॥ ७९ ॥

पुरुषोऽभिहितस्त्वमसीति यदा
किमसानि वदेति तदाभिमुखः ।
श्रवणाय भवेदणिमादिगुणं
सदिति प्रकृतं तदसीति वदेत् ॥८०॥

त्वमसीति पदद्वयसंबन्धानन्तरमेव तदसीति पदद्वयसंबन्ध इत्यत्र युक्तिमाह— पुरुष इति । 'जीवाकारेण निर्दिष्टो ब्रह्माकारेण सर्वतः । अन्तर्बहिः पूरितत्वादिति वा पुरुषो भवेत् ॥' इति वचनात्पूर्णत्वात्पुरुषः । शिष्य-

त्वेनाभिमतः पुरुषो गुरुणा यदा त्वमसीत्यभिहितस्तदा शिष्यः किमस्मि किं भवामि तद्वदेति श्रवणाभिमुखो भवेत् । तदनन्तरं गुरुः सदिति प्रकृतं सदेवेत्यादिना प्रस्तुतमणिमादिगुणं यद्ब्रह्म तदसीति वदेदुपदिशेदित्यर्थः ॥८०॥

**त्वमिति ध्वनिनाभिहितस्य यत-**
**स्तदिति श्रुतिवाच्यसदात्मकताम्।**
**अवदद्वचनं तत एव सतो**
**न हि जीवसतत्त्वकतां वदति ॥**

वाक्यस्य विपरीतबोधकत्वासंभवमुपसंहरति— त्वमिति । तत्त्वमसीति वचनं त्वमसीति ध्वनिनाभिहितस्य त्वंपदलक्ष्यस्य प्रत्यगात्मनस्तदिति श्रुतिवाच्यसदात्मकतां तत्पदलक्ष्यब्रह्मात्मकतामवदद्बोधयतीति यतस्तत एव सतः प्रकृतस्य ब्रह्मणो जीवसतत्त्वकतां त्वंपदवाच्यात्मकतां न वदति न बोधयति । तस्मात्तत्त्वमसिवाक्यं विपरीतबोधकं च न भवेदित्यर्थः ॥ ८१ ॥

**विषयाभिमुखानि शरीरभृतः**
**स्वरसेन सदा करणानि यतः ।**

स्वकमेष न रूपमवैति ततः

प्रतिबोध्यत एव ततो वचनैः ॥८२॥

यदि जीवः सदाविकृतब्रह्मात्मकस्तर्ह्युपदेशं विनैवासौ जीवः किमिति सर्वदाविकृतब्रह्मात्मकत्वं न जानीयादिति यत्पूर्ववादिना पूर्वमुदीरितं तत्परिहरति— विषयेति । शरीरभृतो जीवस्य करणानीन्द्रियाणि स्वरसेन स्वभावत एव सदा विषयाभिमुखानि विषयप्रवणानीति यतस्ततः कारणादेष जीवः स्वकं स्वारसिकं ब्रह्मत्वं नावैति न जानातीति यस्मात्तस्मात्तत्त्वमस्यादिवचनैः प्रतिबोध्यत एवोपशान्तचित्तस्य शिष्यस्य ब्रह्मत्वं [illegible] इत्यर्थः ॥ ८२ ॥

वचनं च पराञ्चिपुरः[illegible]

बहु वैदिकमत्र तथा[illegible]

विषयेषु च नावमिवाम्भसि[illegible]

न्मनसेन्द्रियराशिमविनिग्रहवत् ॥

गुणत्रयात्मकानामिन्द्रियाणामनात्मविषयत्वादात्मनो ब्रह्मत्वमुपदेशमन्तरेण जीवो न जानीयादिति युक्तिं दर्शयि-

-त्वा, इदानीं पराञ्चि खानीत्यादिश्रुतिवचनमप्यत्र प्रमाणमि-
त्याह— वचनमिति । अत्रास्मिन्नर्थे पराञ्चिपुरःसरकम्
'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति ना-
न्तरात्मन्' इत्यादि बहु वैदिकं वचनमपि प्रमाणं तथा
स्मरणं स्मृतिश्च प्रमाणमित्यर्थः । स्मृतिं दर्शयत्युत्तरार्धेन—
विषयेषु चेति । अम्भसि नावमिव यथाम्भसि स्थितां नाव-
मितस्ततो वायुर्नयति तथा विषयेषु चरतामिन्द्रियाणामनु
यन्मनोऽनुविधीयते बहिर्विषयं प्रति गच्छति तन्मनोऽस्य
निर्भाग्यपुरुषस्य प्रज्ञां हरति । तस्माद्यस्येन्द्रियाणि निगृही-
तानि विषयेभ्यः प्रत्याहृतानि तस्य परमविरक्तसंन्यासिनो
गुरूपदिष्टा विद्या सुप्रतिष्ठिता सफला भवेत् 'इन्द्रियाणां
हि चरतां यन्मनोऽनु विधीयते । तदस्य हरति प्रज्ञां
वायुर्नावमिवाम्भसि ॥ तस्माद्यस्य महाबाहो निगृहीतानि
सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥'
इति परमगुरोरच्युतस्य वाक्यं विषयेषु नावमिवेति सूचि-
तम् । तथा 'मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ।
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ॥' इति वाक्यं
मनसैवेति सूचितम् । 'यदा संयच्छते रश्मीञ्ज्ञानानि
मनसा सह । तदा प्रकाशते ह्यात्मा घटे दीपो ज्वलन्निव ॥'

श्रुति वाक्यमिन्द्रियरश्मिविनिग्रहवदिति सूचितम् । इन्द्रियाणां पराग्विषयत्वादनाद्यज्ञानच्छन्नत्वाच्च स्वरूपस्य जीवात्मनो ब्रह्मत्वमुपदेशमन्तरेण न ज्ञायत इत्यभिप्रायः ॥

इयता हि न देहभृतोऽस्ति भिदा
परमात्मदृशोरिति वाच्यमिदम् ।
स्थितिकाल इहापि च सृष्टिमुखे
सदनन्यतया श्रुत एष यतः ॥ ८४ ॥

ननु यदि जीवस्त्रिष्वपि कालेषु ब्रह्मस्वरूपस्तर्ह्येषा कल्पना स्यात्, न च तदस्तीत्याशङ्क्य जीवस्य सदा ब्रह्मत्वे श्रुतिं प्रमाणयति— इयतेति । इयतैतावन्मात्रेण जीवस्य त्रिष्वपि कालेषु ब्रह्मत्वे प्रमाणं त्वया न दृष्टमित्येतावन्मात्रेण देहभृतस्त्वंपदार्थस्य चिदात्मनः परमात्मदृशेः सकाशाद्भिदास्तीति न वाच्यं न वक्तव्यम् । कुतो न वक्तव्यमित्यत्राह— स्थितिकाल इति । इह स्थितेः काले पूर्वं सृष्टिमुखे पुनः संहारकाले उपदेशात्पूर्वं पश्चाद्वर्तमान कालेऽपीति यावत् । एषु त्रिष्वपि कालेष्वेष जीवः सदनन्यतया श्रुतः ब्रह्मणः सकाशादनन्यतया श्रुतः 'ब्रह्मैव

सन्ब्रह्माप्येति ' 'विमुक्तश्च विमुच्यते ' इति । तस्माज्जीवः परमात्मनः सकाशादीषदपि भिन्नो न भवतीत्यर्थः ॥ ८४ ॥

**द्वयमप्यविरोधि शरीरभृतो**
**वचनीयमिदं रघुनन्दनवत् ।**
**उपदेशमपेक्ष्य सदात्ममतिः**
**परमात्मसतत्त्वकता च सदा ॥८५॥**

तर्हि जीवस्य सर्वदा ब्रह्मत्वमुपदेशापेक्षत्वं च विरुद्ध-मित्याशङ्क्य तदुभयमविरुद्धमिति सदृष्टान्तमाह—द्वयमिति । शरीरभृतो जीवस्येदं द्वयमप्यविरोधीति वचनीयं वक्तव्यम् । किं तद्द्वयमित्यपेक्षायां तद्द्वयं दर्शयति— उपदेशमपेक्ष्येति । श्रुत्याचार्योपदेशापेक्षया सदात्ममतिरात्मनो ब्रह्मत्वबुद्धिः सदा परमात्मसतत्त्वकता च जीवस्य त्रिष्वपि कालेषु ब्रह्मता चेत्येतदुभयमविरुद्धं वक्तव्यम् । तत्र दृष्टान्तमाह— रघुनन्दनवदिति । यथा राघवस्य परमार्थतो विष्णुत्वेऽपि रावणवधार्थं मायामानुषोपाधिवशादहं दशरथपुत्रो राघवोऽस्मीति शरीराभिमानी सन्स्वस्य विष्णुत्वं न जानाति, पुनः कालान्तरे रावणवधादूर्ध्वं ब्रह्मादयो देवाः समागत्य स्तुति-

-ध्यानेन रामस्य विष्णुत्वं बोधितवन्तः, तदा स्वस्य विष्णु-त्वं सम्यग्ज्ञातवान्रामः । तद्वदत्राप्युपदेशापेक्षया जीवस्य ब्रह्मत्वं ज्ञायत इत्यर्थः ॥ ८५ ॥

**सदुपासनमस्य विधेयतया**
**वचनस्य मम प्रतिभाति यतः ।**
**अत एव न जीवसदात्मकतां**
**प्रतिबोधयतीत्यवदत्तदसत् ॥ ८६ ॥**

एवं वाक्यस्याखण्डैकवस्तुपरत्वमुपपाद्येदानीं सिंहावलोकनन्यायेनोपासनाविधिपरत्वपक्षमनूद्य दूषयति — सदिति । अस्य तत्त्वमसीति वचनस्य 'सदुपास्स्व' इति सदुपासनं विधेयतया मम भातीति यतः, अत एव जीवस्य सदात्मकतां ब्रह्मात्मकतां न प्रतिबोधयतीति यत्पूर्वमवदद्वोचत्तदसदयुक्तम् ॥ ८६ ॥

**सदुपास्स्व(?) इति श्रुतिरत्र न ते**
**तदसि त्वमिति श्रुतिरेवमियम् ।**

यत एवमतो न विधित्सितता
सदुपासनकर्मण इत्यमृषा ॥ ८७ ॥

कुतः कारणादुपासनापरत्वमयुक्तम् ? विधिपदाश्रवणा-दित्याह सिद्धान्ती— सदिति । अत्र तत्त्वमसिवाक्ये 'सदुपास्स्व' इति विधिपदश्रवणं नास्ति । तर्हि किम-स्तीत्यत्राह— तदसीति । तदसि त्वमित्थमियं वर्तमानोपदे-शिनी श्रुतिरिति यतस्ततः कारणात्सदुपासनकर्मणो विधि-त्सितता नास्त्येवेत्येतदमृषा मृषा न भवेत् । तस्माद्वाक्यमु-पासनाविधिपरं न भवेदित्यर्थः ॥ ८७ ॥

यदि तस्य कुतश्चिदिहानयनं
क्रियते तदनर्थकमेव भवेत् ।
पुरुषेण कृतस्य यतः श्रुतिता
न भवेदिति वेदविदां स्मरणम् ॥

यद्येवं विधिपदाश्रवणादुपासनापरत्वं नास्ति तर्हि वि-धिपदमभ्याहरिष्यत इत्यत्राह— यदीति । तस्य विधि-पदस्य कुतश्चित्प्रदेशादिहास्मिन्वाक्य आनयनं क्रियते यदि

विधिपदमध्याहरिष्यते यदि तर्हि तद्विधिपदमनर्थकमेव भवेत्। विधिपदाध्याहारे तस्यानर्थक्यं कथमित्यपेक्षायामाह— पुरुषेण कृतस्य विधिपदस्य श्रुतिता न भवेद्वेदस्यापौरुषेयत्वादिति वेदविदां स्मरणम्, तस्माद्विधिपदाध्याहारो न युक्त इत्यर्थः ॥ ८८ ॥

किमरे पुरुषं प्रतिबोधयितुं
स्वकमर्थमशक्तमिदं वचनम्।
यदतोऽन्यत आनयनं क्रियते
भवता श्रवणेन विनापि विधेः ॥

ननु तथापि वाक्यपरिपूर्तिहेतुत्वादध्याहारस्यानर्थक्यं कथं भवेदित्यत्राह— किमिति। अरे इति नीचसंबोधनम्। इदं तत्त्वमसिवचनं स्वकमर्थं प्रत्यग्ब्रह्मणोरेकत्वं पुरुषमधिकारिणं प्रतिबोधयितुमशक्तमसमर्थं किं येनासामर्थ्येन श्रवणेन विनापि विधेरानयनं क्रियते तथा वाक्यमसमर्थं किमित्याक्षेपनम्। तस्माद्विधिपदाध्याहारमन्तरेण वाक्यस्यार्थपरिपूर्तिहेतुत्वादध्याहारापेक्षा नास्तीत्यर्थः ॥

श्रुतहानिरिहाश्रुतक्लृप्तिरपि
श्रुतिवित्समयो न भवेत्तु यतः ।
श्रुतिभक्तिमता श्रुतिवक्त्रगतं
ग्रहणीयमतो न तु बुद्धिवशात् ॥

पुनरपि विधिपदाध्याहारो न युक्त इत्यत्र हेत्वन्तरमाह—श्रुतहानिरिति । इह विधिपदाध्याहारपक्षेऽयमपि महान्दोषः स्यात्, श्रुतहानिर्यथाश्रुतार्थपरित्यागः अश्रुतक्लृप्तिरपि अश्रुतार्थपरिकल्पना च, श्रुतिवित्समयो न भवेद्वेदार्थविदां सिद्धान्तोऽपि पतेत् । यत एवमतः कारणात् श्रुतिभक्तिमता श्रुतौ गौरवाच्छ्रुतिवक्त्रगतं श्रुतिमुखादुद्गतं यत्तदेव ग्रहणीयं न तु बुद्धिवशात्स्वमनीषया किंचिदपि परिकल्पयितव्यमित्यर्थः ॥ ९० ॥

पुरुषस्य शरीरगतात्ममतिं
सृतिसंभवहेतुमनर्थकरीम् ।

अपनीय सदात्ममतिं दधती
महते पुरुषस्य हिताय भवेत् ॥९१॥

एवं तावत्तत्त्वमसिवाक्ये विधिपदाश्रवणाद्विधिपदाध्याहारस्य चान्याय्यत्वात्तद्वाक्यमुपासनाविधिपरं न भवेत्, किं त्वखण्डैकरसवस्तुपरमिति साधितम्। तत्रेदमाशङ्क्यते—तत्त्वमसिवाक्यस्य वस्तुपरत्वे वस्तुनो हानोपादानाविषयत्वात्पुरुषार्थरहितं वाक्यं प्रसज्येत। विधिपरत्वे तु पुरुषप्रवृत्तिः प्रयोजनं प्रयोजनस्य प्रवृत्तिनिवृत्तिसाध्यत्वादिति। तदयुक्तमिति सिद्धार्थवादिनो मन्यन्ते, वस्तुपरत्वे त्वशेषानर्थमूलाज्ञाननिवृत्तिः परमपुरुषार्थो विद्यत एवेत्याह सिद्धान्ती— पुरुषस्येति। पुरुषस्यानेकानर्थकरीं मृतिसंभवहेतुं शरीरगतात्ममतिमपनीय पुरुषस्य जीवस्य सदात्ममतिं दधती श्रुतिर्महते हिताय भवेद्वाक्यजनितज्ञानस्य मोक्षहेतुत्वादित्यर्थः ॥ ९१ ॥

विनिवर्तत एव शरीरगता
विपरीतमतिः पुरुषस्य तदा।

**वचनेन तु तत्त्वमसीति यदा**
**प्रतिबोध्यत एष त इत्यपि च ॥९२॥**

नन्वेवमपि तत्त्वमसिवाक्यस्य पुरुषार्थहेतुत्वमनुपपन्नम्, महता प्रयत्नेनाहर्निशं तत्त्वमसिवाक्यमसकृच्छ्रुतवतामप्यस्माकमनर्थहेत्वज्ञाननिवृत्तेरदर्शनादित्याशङ्क्य, पापाच्छन्नबुद्धीनां कुतार्किकाणामेवैतत्, न तु भगवद्भक्तानां परमहंसानाम्, तेषां क्षीणकल्मषत्वात्सकृच्छ्रवणादप्यनुभवपर्यन्तज्ञानोत्पत्तिसंभवादित्यभिप्रायेणाह– विनिवर्तत इति। यस्मादधिकारिणः प्रमितिजनको वेदस्तस्मात् 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'एष त आत्मा' 'प्रज्ञानं ब्रह्म' इत्यादिमहावाक्यैर्येन यदा शिष्यत्वेनाभिमतः पुरुष एवं प्रतिबोध्यते— नासि त्वं देहेन्द्रियप्राणाहंकारसंघातस्तेषां घटादिवद्दृश्यत्वात्, नापि संसारी त्वं त्वयि प्रतीयमानस्य सुखदुःखादेरन्तःकरणोपाधिनिबन्धनत्वात्, किं तर्हि स्वरूपम्? यत्सर्ववेदान्तप्रतिपाद्यमद्वयसदानन्दप्रत्यग्बोधरूपं वस्तु तदेव त्वमिति परमकारुणिकेन गुरुणा प्रतिबोध्यते; तदैवोत्तमाधिकारिणः शिष्यस्य शरीरगता विपरीतमतिर्विनिवर्तत एव, अनात्मन्यात्मबुद्धिर्विनिवर्तते। तस्माद्वाक्यजनितज्ञानेनाज्ञा-

नतत्कार्यनिवृत्तौ निरतिशयानन्दाविर्भावलक्षणस्य प्रयोजनस्य विद्यमानत्वाद्वस्तुपरत्वे वाक्यस्य पुरुषार्थपर्यवसायित्वमस्त्येवेत्यर्थः ॥ १२ ॥

यदि नापनयेच्छ्रुतिरात्ममतिं
पुरुषस्य शरीरगतामनृताम् ।
तदहंमतिहेतुककर्मगतिं
सुखदुःखफलामवशोऽनुभवेत् ॥ १३ ॥

यदि पुनस्तत्त्वमसिवाक्यमज्ञाननिवर्तकं न भवेत्तर्हि जननमरणादिलक्षणः संसारो दुर्निवारः स्यादिति विपक्षे दोषमाह— यदीति । पुरुषस्य शरीरगतामनृतामात्ममतिं श्रुतिर्नापनयेद्यदि अनात्मन्यात्ममतिं न निवर्तयेद्यदि तर्हि सुखदुःखफलामहंमतिहेतुकस्य कर्मणो गतिं सुरनरतिर्यगादिप्राप्तिरूपामवशोऽनुभवेत् । तस्माद्वाक्यजन्यज्ञानेन निवृत्तायामविद्यायां तत्कार्यस्य संसारस्यापि निवृत्तिसंभवाद्वाक्यस्याखण्डैकरसवस्तुपरत्वे निरवद्यपुरुषार्थसाधनत्वं संभवतीत्यर्थः ॥ १३ ॥

यदि तत्त्वमसीति वदेद्वचनं
सदुपासनकर्म न तत्त्वमिति ।
पुरुषस्य फलं सदुपासनतो
विमृशामि भविष्यति कीदृगिति ॥

एवं वाक्यस्य वस्तुपरत्वे निरवद्यफलत्वमुपपाद्य विधिपरत्वे तु वाक्यस्य फलाभावं दर्शयति— यदीति । तत्त्वमसीति वचनं सदुपास्स्वेति सदुपासनालक्षणं कर्म वदेद्यदि तत्त्वमसीति जीवपरयोरेकत्वं न बोधयेद्यदि तर्हि ब्रह्मोपासकस्य पुरुषस्य सदुपासनतः कीदृक्फलं भविष्यतीति विमृशामि । उपासनापरत्वे न किंचिदपि फलं भविष्यतीत्यर्थः ॥ ९४ ॥

पुरुषस्य तु मर्त्यगुणस्य भवे-
त्सदुपासनया न सदात्मकता ।
न कथंचिदपि प्रजहाति यतः
प्रकृतिं सहजामिह कश्चिदपि ॥९५॥

किमत्र विमर्शनेन ? ब्रह्मोपासकस्य ब्रह्मणोऽत्यन्तभिन्नस्यापि ब्रह्मणैकत्वापत्तिरेव फलं भविष्यतीत्याशङ्कयाह— पुरुषस्येति । मर्त्यगुणस्य परमार्थतो मर्त्यधर्मयुक्तस्य पुरुषस्य सदुपासनया सदात्मकता न भवेत् , सद्रूपब्रह्मप्राप्तिर्न भवेत् । तत्र हेतुमाह— न कथंचिदपीति । इह कश्चिदपि सहजां निजसिद्धां प्रकृतिं स्वभावं न जहाति न परित्यजतीति यतस्ततः कारणात्सदुपासनया सद्रूपप्राप्तिर्न भवतीत्यर्थः ॥ ९५ ॥

यदि देहभृदेष सदात्मकतां
प्रगमिष्यति वै सदुपासनया ।
न न हास्यति रूपमसौ हि निजं
यत ऐक्यमतिर्न भवत्युभयोः ॥९६॥

उपासनापरत्ववादिमते बन्धस्य सत्यत्वावगमादात्मनो मर्त्यस्वभावस्यान्योन्यत्यन्तभिन्नस्य संभवादमृतलक्षणब्रह्मप्राप्तिरुपासनाफलं न भवेदित्युक्तम् । इदानीं यदि पुनरभिनिवेशमात्रेण ब्रह्मप्राप्तिरेवोपासनाफलं कल्प्यते तर्हि जीवस्य स्वरूपहानिरत्यन्तविरुद्धस्वभावयोरैक्यासंभवाच्चिलाद्. सि-

व्याचष्टे—यदीति । एष देहभृज्जीवः सदुपासनया ब्रह्मोपासनया सदात्मकतां प्रगमिष्यति यदि, तर्ह्यसौ जीवो निजं मर्त्यस्वभावं न न हास्यति किं तु हास्यत्येव । तत्र हेतुः— यत इति । उभयोरत्यन्तविलक्षणयोर्विरुद्ध-स्वभावत्वादैक्यमतिर्न भवति । एकत्वलक्षणफलाङ्गीकारे मर्त्यत्वलक्षणायाः प्रकृतेः परित्यागसंभवात्तत्परित्यागे च स्वरूपस्यापि नाशप्रसङ्गाज्जीवस्य ब्रह्मत्वापत्तिरुपासनाफल-मिति न वक्तव्यम्, मर्त्यस्वभावपरित्यागे चान्यस्यान्यात्म-कतायोगादुभयथापि ब्रह्मप्राप्तिरुपासनाफलं न भवेदित्यर्थः । तदुक्तमाचार्यैः— 'नान्यदन्यद्भवेत्तस्मान्नान्यदन्यद्विचिन्त-येत् । अन्यस्यान्यात्मभावे हि नाशस्तस्य ध्रुवो भवेत् ॥' इति ॥ ९६ ॥

रसविद्धमयः प्रकृतिं सहजां
प्रविहाय यथा कनकत्वमियात् ।
पुरुषोऽपि तथा सदुपासनया
प्रतिपत्स्यत एव सदात्मकताम् ॥

ननु स्वरूपनाशेन विनापि लोके रसविद्धस्यायसः कन-

कत्वप्राप्तिर्दृष्टा, तद्वदत्रापि मर्त्यस्वभावविनाशेऽपि जीवस्य स्वरूपनाशमन्तरेण ब्रह्मत्वापत्तिः फलं भवतीति चोदयति पूर्ववादी— रसविद्धमिति । रसविद्धमयः स्वनाशमन्तरेण सहजां प्रकृतिमयस्त्वं प्रविहाय कनकत्वं यथैयात्प्राप्नुयात् , तथा पुरुषोऽपि सदुपासनया 'अहं ब्रह्मास्मि' इति संततोपासनया स्वनाशमन्तरेण सहजं मर्त्यत्वं प्रविहाय सदात्मकतां प्रतिपत्स्यत एवेति यस्मात्तस्माद्वाक्यजनितसम्यग्ज्ञानमन्तरेणापि सदुपासनाकर्मणैव जीवस्य ब्रह्मप्राप्तिः संभवतीति चोद्यवादिनोऽभिप्रायः ॥ ९७ ॥

अयसोऽवयवानभिभूय रसः
स्थितवाननलानुगृहीतिमनु ।
कनकत्वमतिं जनयत्ययसि
प्रतिपन्नमयो न तु काञ्चनताम् ॥

एष दृष्टान्तो विद्वत्संप्रतिपन्नो न भवति, अयसः कनकत्वस्य भ्रान्तित्वादिति परिहरति सिद्धान्ती— अयस इति । अयसोऽवयवानभिभूयाच्छाद्य स्थितवान्रसोऽनलानुगृहीतिमनु अग्नौ प्रक्षेपणानन्तरं तदनुग्रहबलादयसि लोहे

केवलं कनकत्वमतिं जनयति भ्रान्तानां तत्र स्वर्णबुद्धि-मुत्पादयति । अयस्तु पुनः काञ्चनतां न प्रतिपन्नं न प्राप्त-मित्यर्थः ॥ ९८ ॥

उदकावयवानभिभूय पयो
रजतावयवांश्च यथा कनकम् ।
विपरीतमतिं जनयत्युदके
रजते च तथायसि हेममतिम् ॥

एतमेवार्थं दृष्टान्तेन स्पष्टयति— उदकेति । यथा पयो दुग्धमतिमुदकावयवानभिभूयाच्छाद्योदके जनयति, यथा च कनकं रजतावयवानभिभूय रजते कनकत्वमतिं जनयति, तथा रसोऽयसोऽवयवानभिभूयायसि हेमबुद्धिं जनयति, हेममतिमेव केवलं जनयति न तु हेम करोति । यस्मादेवं तस्मादयसः काञ्चनत्वं भ्रान्तिपरिगृहीतमित्यर्थः ॥

रसवीर्यविपाकाविनाशमनु
प्रविनश्यति काञ्चनताप्ययसः ।

कृतकं हि न नित्यमिति प्रगतं
समवेतमवश्यमपैति यतः ॥ १०० ॥

इतश्चायसः काञ्चनत्वं भ्रान्तिमात्रम्, रसवीर्यविपाक-नाशे काञ्चनप्रतीत्यभावात् । तद्भावस्यागन्तुकस्यावश्यं वस्त्रादिवदनित्यतानुमानादित्याह — रसवीर्येति । अयसः काञ्चनत्वभ्रान्तिरपि रसवीर्यविपाकविनाशमनु प्रविनश्यति । रसवीर्यविपाकस्य विनाशे काञ्चनत्वप्रतीतिरपि नश्यति । तत्र हेतुं कथयति— समवेतमिति । समवेतं कार्यमवश्य-मपैति विनङ्क्ष्यतीति यतोऽतः । तत्र व्याप्तिं दर्शयति— कृतकं हीति । कृतकं कार्यमुद्भूतं वस्तु नित्यं न भवतीति प्रगतं वस्त्रादौ प्रसिद्धमिति यस्मात्तस्मादयसः काञ्चनत्वं भ्रान्तिसिद्धमित्यर्थः ॥ १०० ॥

अमृतत्वमसत्पुरुषस्य यदि
क्रियते सदुपासनया यजिवत् ।
यजिकार्यवदन्तवदेव भवे-
त्कृतकस्य यतो विदिताध्रुवता ॥

एवमन्यस्यान्यात्मकत्वस्य भ्रान्तिमात्रत्वात्परमार्थतोऽन्यस्यान्यात्मत्वासंभवान्मर्त्यस्वभावस्य जीवस्य सदुपासनकर्मणामृतत्वलक्षणब्रह्मप्राप्तिर्न संभवतीत्युक्तम् । तत्रेदमाशङ्क्यते— अमृतत्वं नाम प्रागविद्यमानमेवोपासनाकर्मसाध्यं भविष्यति यागादिसाध्यस्वर्गादिकफलवदित्यत्राह सिद्धान्ती— अमृतत्वमिति । यजिवद्यागादिवत्पूर्वमसदेवामृतत्वं पुरुषस्य सदुपासनया क्रियते संपाद्यते यदि तर्हि यजिकार्यवत्स्वर्गादिवदन्तवदेव भवेत् । तत्र हेतुमाह— कृतकस्येति । कृतकस्य कार्यस्याध्रुवतानित्यता स्वर्गादिफले विदिता विज्ञाता 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' यद्भावत्वे सति कृतकं तदनित्यं यथा घट इति श्रुत्यनुमानाभ्यां सिद्धं कृतकस्यानित्यत्वम् । तस्मादमृतत्वस्य क्रियासाध्यत्वे तस्य विनाशित्वमवश्यं भवेदित्यर्थः ॥ १०१ ॥

**पुरुषस्य सतश्च विधर्मकयोः**
**सदुपासनया न भवेत्समितिः ।**

यदि संगतिरिष्यत एव तयो-
रवियुक्ततया न चिरं वसतः ॥१०२॥

ननु यागसाध्यस्वर्गादिवत्तन्मा भूदुपासनाफलम्, जीव-ब्रह्मणोः संयोगाख्यं फलं भविष्यतीत्याशङ्कयाह— पुरुषस्येति । विधर्मकयोः संसारित्वासंसारित्वादिविरुद्धधर्मकयोः पुरुषस्य सतश्चेत्येतयोः सदुपासनया ब्रह्मोपासनकर्मणा समितिः संगतिर्न भवेत् । विपक्षे दोषमाह— यदीति । तयोः संगतिरिष्यते यदि तर्ह्यवियुक्ततया संयुक्ततया चिरं न वसतः, 'संयोगो विप्रयोगान्तः' इति न्यायात्, उपासनापरत्वपक्षे विनाशरहितं फलं नास्तीत्यर्थः ॥१०२॥

फलमीदृगिदं सदुपासनतः
पुरुषस्य भविष्यति नान्यदतः ।
न च तन्निरवद्यतयाभिमतं
विदुषां बहुदोषसमीक्षणतः ॥१०३॥

मोक्षस्य चतुर्विधक्रियाफलविलक्षणत्वादुपासनाख्यं कर्म मोक्षसाधनं न भवेदित्याह— फलमिति । सदुपासनतो

ब्रह्मोपासनकर्मणा। पुरुषस्योपासकस्येदमीदृगेतादृशमेव फलं भविष्यति, अतोऽन्यन्नित्यं नास्ति । यद्यन्यत्फलं कल्प्येत तदपि फलं निरवद्यतया निर्दुष्टतया विदुषां नाभिमतम् । कुतो नाभिमतमित्यत्राह— बहुदोषसमीक्षणत इति । साधनसाध्यस्य सर्वस्यानित्यत्वजडत्वादिदोषदर्शनादित्यर्थः ॥

**सदुपासनकर्मविधानपरं**
**न भवेदत एव हि तद्वचनम् ।**
**अहमस्मि शरीरमिदं च ममे-**
**त्यविवेकमतिं विनिवर्तयति ॥१०४॥**

एवं तावत्तत्त्वमसिवाक्यस्योपासनाविधिपरत्वे समीचीनफलाभावादुपासनापरत्वमयुक्तमित्युक्तम् । इदानीं किं तर्हि युक्तमित्यपेक्षायां यथावस्थितवस्तुबोधकतयाऽज्ञाननिवृत्तिद्वारेण मोक्षसाधनत्वमेवेत्याह सिद्धान्ती— **सदुपेति** । सत एवोपासनापरत्वे निरवद्यफलाभावादेव तद्वचनं तत्त्वमसिवाक्यं सदुपासनकर्मविधानपरं न भवेत् । तर्हि तद्वाक्यं किंपरमित्यत्राह— अहमस्मीति । इदं शरीरमहमस्मीति मनुष्योऽहं ब्राह्मणोऽहं क्षत्रियोऽहं व्रती संन्यासीति शरी-

रादिष्वहंबुद्धिम् , इदं शरीरं मदीयमिति शरीरगतात्मीय-बुद्धिं च विनिवर्तयति, अनात्मविवेचनतयात्मज्ञानमुत्पाद-यतीत्यर्थः ॥ १०४ ॥

**सकलोपनिषत्सु शरीरभृतः**
**परमात्मपदैकविभक्तितया ।**
**उपदेशवचांस्यनयैव दिशा**
**गमयेन्मतिमानभियुक्ततया ॥१०५॥**

एवं तत्त्वमसिवाक्यस्याखण्डैकरसवस्तुपरत्वमुपपादि-तम् । इदानीं सर्वशाखोपनिषद्गतानि महावाक्यान्यप्यनयैव दिशा योजयितव्यानीत्याह— सकलेति । शरीरभृतो जीव-वाचकपदस्य परमात्मपदैकविभक्तितया परमात्मवाचकपदे-नैकविभक्तितया सामानाधिकरण्येन सकलोपनिषत्सु विद्य-मानानि यान्युपदेशवचांस्यैकत्वप्रतिपादकानि वाक्यानि ता-न्यपि मतिमानुपनिषदां शक्तितात्पर्यज्ञोऽनयैव दिशोक्तेन मार्गेण यथा तत्त्वमसिवाक्यस्य गुणवादस्तुतिविपरीत-बोधकत्वोपासनापरत्वनिरासेन जीवपरैक्यबोधकत्वमुपपा-दितं तथाभियुक्ततया प्रामाण्येन गमयेद्बुध्येदित्यर्थः ॥

द्रविडोऽपि च तत्त्वमसीति वचो
विनिवर्तकमेव निरूपितवान् ।
शबरेण विवर्धितराजशिशो-
र्निजजन्मविदुक्तिनिदर्शनतः ॥

संप्रदायविद्वचनमप्यत्र प्रमाणमित्याह— द्रविड इति । द्रविडाचार्यश्चोपदेशसाहस्र्याम् ' श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ' इत्यादिना तत्त्वमसीति वचस्तत्त्वमसीति वाक्यमज्ञानस्य निवर्तकमेवेति निरूपितवान् । तत्र दृष्टान्तं दर्शयति— शबरेणेति । कुतश्चित्कारणादरण्यं प्राप्तस्य शबरेण विवर्धितस्य राजशिशोः राजपुत्रस्य निजं जन्म वेत्तीति निजजन्मविद्यः शबरस्तस्योक्तिर्यथा राजपुत्रस्य राजपुत्रत्वाज्ञाननिवर्तिका, तन्निदर्शनतस्तद्दृष्टान्तत्वेन तत्त्वमसिवाक्यस्याज्ञाननिवर्तकत्वं निरूपितवानित्यर्थः ॥ १०६ ॥

यत एवमतः स्वशरीरगता-
महमित्यविवेकमतिं सुदृढाम् ।

प्रविहाय यदक्षरमद्वयकं
त्वमवेहि तदक्षरमात्मतया ॥१०७॥

यस्मात्तत्त्वमसिवाक्यमज्ञाननिवर्तकं तस्मात्त्वं देहादिष्वहंममाभिमानं परित्यज्याखण्डवाक्यार्थज्ञानानुकूलतया वर्तस्वेति शिष्यं शिक्षयति गुरुः— यत इति। यत एवं यस्मादेवं वाक्यमज्ञाननिवर्तकं तस्मात्कारणात्स्वशरीरगतां सुदृढामहंममेत्यनादिसिद्धामविवेकमतिं प्रविहाय ततः परमद्वयं सजातीयविजातीयनानात्वरहितं न क्षरतीत्यक्षरं यद्ब्रह्म तदात्मतयावेहि स्वस्वरूपत्वेन जानीहीत्यर्थः ॥

न मनो न मतिः करणानि च नो
न रजो न तमो न च सत्त्वमपि।
न मही न जलं न च वह्निरपि
श्वसनो न नभश्च पदं परमम् ॥

अमनस्कमधीकमनिन्द्रियकं
विरजस्कमसत्त्वतमस्कमपि।

अमहीजलवह्न्यनिलाम्बरकं
परमक्षरमात्मतयाश्रय भोः ॥१०९॥

त्वमेवेहि तदक्षरमात्मतयेति प्रत्यग्ब्रह्मणोरेकत्वमुक्तम् । तत्सिद्ध्यर्थं तत्त्वंपदार्थपरिशोधनं करोति श्लोकषट्केन ॥ तत्र न मनो न मतिरित्यादिश्लोकद्वयेन तत्पदार्थपरिशोधनं क्रियते । तत्राद्यश्लोकेन तत्पदलक्ष्यस्य ब्रह्मणो मनआदिवैलक्षण्यं साधयति, द्वितीयश्लोकेन मनआदिना संबन्धराहित्यं दर्शयतीति विभागः । नेति । न मनो न मतिरित्यादिश्लोकद्वयस्यायं भावः— मनआदिकमात्मा न भवति, दृश्यत्वात्करणत्वात्कार्यत्वाद्विभक्तत्वाज्जडत्वात्परिच्छिन्नत्वात् आद्यन्तवत्त्वाच्च ; एवं मनआदेरनात्मत्वे सिद्धे तत्साक्षिण आत्मनो निरवयवत्वादसङ्गस्वभावत्वादहंकारममकारादिराहित्याच्च नित्यत्वं शुद्धत्वं बुद्धत्वं मुक्तत्वमविलुप्तदृक्स्वरूपत्वं च सिद्धम् । यदेवंभूतं परमक्षरं तदाश्रयात्मतयेत्युपदेशप्रकारः ॥ १०८, १०९ ॥

करणानि हि यद्विषयाभिमुखं
प्रशमय्य मतिर्विषयेषु चरेत् ।

तदु जागरितं प्रवदन्ति बुधा
न तदस्ति ममेत्यवगच्छ दृशेः ॥

इदानीं त्वंपदार्थपरिशोधनाय जागरितावस्थां दर्शयति— करणानीति । मतिः करणानीन्द्रियाणि विषयाभिमुखं यथा भवन्ति तथा प्रगमय्य प्रापय्य विषयेषु चरेदिति यत्तद्धि बुधा जागरितं प्रवदन्ति । दृशेर्दृग्रूपस्य स्वयंप्रभस्य मम तज्जागरितं नास्तीत्यवगच्छ जानीहीत्यर्थः ॥ ११० ॥

करणानि यदोपरतानि तदा
विषयानुभवाहितवासनया ।
विषयेण विना विषयप्रतिमं
स्फुरणं स्वपनं प्रवदन्ति बुधाः ॥

इदानीं स्वप्नावस्थां दर्शयति— करणानीति । जाग्रत्स्थितिनिमित्तकर्मक्षये यदा करणानीन्द्रियाण्युपरतानि बाह्यविषयेभ्यो विनिवृत्तानि तदा बाह्यविषयेण विना केवलं विषयानुभवाहितवासनयानुभवजनितसंस्कारमात्रेण विषयप्रतिमं स्फुरणं स्वप्नं प्रवदन्ति बुधाः । उपसंहृतकरणस्य

जाग्रद्वासनानिमित्तं तथाविधहस्त्यश्वरथादिविषयं ज्ञानं स्वप्न इत्यर्थः ॥ १११ ॥

करणस्य धियः स्फुरणेन विना
विषयाकृतिकेन तु या स्थितता ।
प्रवदन्ति सुषुप्तिममुं हि बुधा
विनिवृत्ततृषः श्रुतितत्त्वविदः ॥११२॥

इदानीं सुषुप्त्यवस्थां दर्शयति— करणस्येति । करणस्य धियोऽन्तःकरणरूपाया बुद्धेर्विषयाकृतिकेन विषयाकारेण स्फुरणेन विना या स्थितता, अमुं निर्विषयां स्थितिं सुषुप्तिं वदन्ति बुधाः । कीदृशाः ? विनिवृत्ततृषः आरोपितस्य निषेध्यत्वे सति दृष्टानुश्रविकविषयेभ्यो विनिवृत्ता तृट् तृष्णा येषां ते विनिवृत्ततृषः एषणात्रयरहिताः परमहंसाः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिषु प्रतिपादितं यत्तत्त्वं तद्विदन्तीति श्रुतितत्त्वविदस्ते ब्रह्मज्ञानिनो वदन्तीत्यन्वयः । बुद्धेः स्वकारणोपरमं सुषुप्तिं प्रवदन्तीत्यर्थः ॥ ११२ ॥

इति जागरितं स्वपनं च धियः
क्रमतोऽक्रमतश्च सुषुप्तिरपि ।
न कदाचिदपि त्रयमस्ति ममे-
त्यवगच्छ सदास्मि तुरीयमिति ॥

एवमवस्थात्रयं दर्शयित्वा इदानीं तत्साक्षिणश्चिदात्मनोऽवस्थात्रयराहित्यं दर्शयति— इतीति । इत्थं क्रमतोऽक्रमतश्च यातायातं वर्तमानं जागरितं स्वपनं सुषुप्तिरपीत्येतदवस्थात्रयं धिय एव धीधर्म एव, तत्साक्षिणश्चिदात्मनो मम कदाचिदपीदमवस्थात्रयं नास्तीत्यवगच्छ । किं च सदा देहेन्द्रियमनसां प्रसारे प्रशान्तावपि स्वयंप्रकाशपरमानन्दचिद्घनमवस्थात्रयातीतं तुरीयं पदं तदेवाहमस्मीत्यवगच्छ । तदुक्तमाचार्यैः— 'सुषुप्तिजाग्रत्स्वपनं च दर्शनं न मेऽस्ति किंचित्स्वमिवेह मोहनम् । स्वतश्च तेषां परतोऽप्यसत्त्वतस्तुरीय एवास्मि सदा दृगद्वयः ॥' इति । एवं जानीहीत्यर्थः ॥ ११३ ॥

यदु जागरितप्रभृति त्रितयं
परिकल्पितमात्मनि मूढधिया ।

अभिधानमिदं तदपेक्ष्य भवे-

त्परमात्मपदस्य तुरीयमिति ॥११४॥

यद्येवं तस्यात्मनस्तुरीयत्वं नाम चतुर्थत्वं परमार्थतो-ऽङ्गीकृतं स्यात्, ततश्चात्मनो निर्विशेषत्वं कथं स्यादित्या-शङ्क्यावस्थात्रयमपेक्ष्य तुरीयत्वमित्याह तस्यासत्यत्वकथ-नाय— यदिति । मूढधियाविवेकिना प्रत्यगात्मनि यज्जा-ग्रत्प्रभृति त्रितयं परिकल्पितं तदवस्थात्रयमपेक्ष्य परमा-त्मपदस्य तुरीयमितीदमभिधानं भवेत् । यस्मात्तुरीयत्वं साकाङ्क्षं तस्मात्तुरीयशब्दवाच्यमवस्थान्तरं वस्तुतो नास्ति । अग्रहणान्यथाग्रहणरहितं स्वयंप्रकाशपरमानन्दचिद्घनं पर-मात्मतत्त्वं तुरीयशब्देन विवक्ष्यते, न तु तुरीयमित्यवस्था-न्तरम् । ततश्चात्मा निर्विशेषः सिध्यतीत्यभिप्रायः ॥ ११४॥

यदपेक्ष्य भवेदभिधानमिदं

परमात्मपदस्य तुरीयमिति ।

तदसत्यमसत्यगुणश्च ततः

परिनिर्मितवारणचेष्टितवत् ॥ ११५ ॥

नन्ववस्थात्रयमपेक्ष्य तुरीयत्वं भवतु, तथापि तत्सत्यं भविष्यतीत्याशङ्क्य, अवस्थात्रयस्य मायामयत्वात्तदपेक्षितं तुरीयत्वमपि तथाविधमेवेत्यभिप्रेत्याह— यदिति । यदव- स्थात्रयमपेक्ष्य परमात्मपदस्य परमात्मवस्तुनः तुरीयमितीद- मभिधानं भवेत्तदवस्थात्रयमसत्यम् । अवस्थात्रयस्यासत्यत्वे हेतुमाह— असत्यगुण इति । असत्यस्य मनसो गुणो धर्म इति यस्मात्तस्मादवस्थात्रयमसत्यम् । असत्यधर्मस्या- सत्यत्वे दृष्टान्तमाह— कृतिनिर्मितेति । मत्तगजाकीर्णे वन- प्रदेशे संचरता गजभीरुणा केनचिद्गजपरिमितपाषाणे समा- रोपितस्य वारणस्य चेष्टितं करचरणादिमत्त्वं तच्चेष्टितं च यद्वदसत्यं तद्वन्मायामयस्य मनसो गुण[illegible]मस- सत्यम् । तथा च तदपेक्षितं तुरीयत्वमपि परमात्म[illegible]ति- रेकेण वस्तुतो नास्तीत्यभिप्रायः ॥ ११५ ॥

**गगनप्रमुखं पृथिवीचरमं**
**विषयेन्द्रियबुद्धिमनःसहितम् ।**
**जनिमज्जगदेतदभूतमिति**
**श्रुतयः प्रवदन्त्युपमानशतैः ॥११६॥**

असत्यमनोधर्मत्वाज्जागरितादित्रयमप्यसत्यमित्युक्तम् । इदानीं तत्साधनाय मनआदिजगतोऽसत्यत्वं साधयति—गगनेति । गगनप्रमुखं पृथिवीचरमम् आकाशमारभ्य पृथिव्यन्तं विषयेन्द्रियबुद्धिमनःसहितमेतत्सर्वं जगज्जातमभूतमसत्यमिति श्रुतय उपमानशतैः प्रवदन्ति । मनआदिजगतो दृष्टान्तशतेन जनितत्वान्मिथ्यात्वं कथयन्ति श्रुतय इत्यर्थः ॥ ११६ ॥

कफपित्तसमीरणधातुधृतं
कुशरीरमिदं सततं हि यथा ।
प्रभवप्रभृति प्रलयान्तमिदं
जगदग्निरवीन्दुधृतं हि तथा ॥११७॥

तत्र दृष्टान्तं दर्शयितुमुपोद्घातं करोति— कफेति । प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घात इति लक्षणैरुपदिष्टामुपोद्घातप्रक्रियामाश्रित्य मनआदेरनृतत्वं साध्यते । इदं कुशरीरं कुत्सितं शरीरं यथा सततं कफपित्तसमीरणधातुधृतं वातपित्तश्लेष्माख्यस्य धातोर्वैषम्ये सति शरीरस्य नाशदर्शनाग्निधातुवैषम्याभावे च स्वास्थ्य-

दर्शनाच्छरीरं कफपित्तसमीरणधातुधृतमित्युच्यते । यथायं दृष्टान्तस्तथा प्रभवप्रभृति प्रलयान्तमिदं जगदग्निरवीन्दुभिर्धृतम्, अग्न्यादीनां ज्योतिषामन्यतमस्याप्यभावे जगदन्धतमो भवेत्, ततश्च जगतः स्थितिरपि न स्यादित्यभिप्रायेण जगदग्निरवीन्दुधृतमित्युच्यत इत्यभिप्रायः ॥११७॥

जगतः स्थितिकारणमित्थमिदं
प्रथितं रविवह्निशशित्रितयम् ।
स्मृतिवेदजनेषु भृशं प्रथितं
श्रुतिरीरितवत्यनृतं तदिति ॥ ११८ ॥

कुशरीरधारकधातुत्रितयवज्जगद्धारकस्याग्न्यादित्रितयस्यासत्यत्वं श्रुतिर्दृष्टान्तेनोक्तवतीत्याह— जगत इति । इत्थमुक्तेन प्रकारेण तद्रविवह्निशशित्रितयं जगत्स्थितिकारणमिति स्मृतिवेदजनेषु प्रथितं प्रसिद्धम् 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' 'अग्नौ

प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टि-र्वृष्टेरन्नं ततः प्रजाः ॥' इति वेदस्मृतिविद्वज्जनेषु जगत्स्थि-तिहेतुतया प्रथितं यदग्न्यादित्रितयं तदग्न्यादिकमनृतमिति श्रुतिरीरितवत्युक्तवतीत्यर्थः ॥ ११८ ॥

यदु रोहितशुक्लसुकृष्णमिदं
ज्वलनादिषु रूपमवैति जनः ।
तदु तैजसमाप्यमथान्नमिति
ब्रुवती त्रयमेव तु सत्यमिति ॥११९॥

कथमग्न्यादित्रितयस्यानृतत्वं श्रुतिरुक्तवतीत्याकाङ्क्षायां श्रुतेरुक्तिप्रकारं दर्शयति यदु रोहितशुक्लसुकृष्णमित्यारभ्य अनयोपमयानृततामवदच्छ्रुतिरग्निदिवाकरचन्द्रमसामित्यन्तेन ग्रन्थेन । यदिति । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति छान्दोग्यश्रुतिर्ज्वलनादि-ष्वनुगतं यद्रोहितशुक्लकृष्णमिदं रूपं जनोऽवैति जानाति । तेषां रूपाणां मध्ये यद्रोहितं रूपं तत्तैजसं तेजःसंबन्धि यत्तेजसः कारणं रोहितमित्यर्थः । तेषां मध्ये यच्छुक्लं तदा-प्यमप्संबन्धि तद्भेदेनामृतकिरणश्चन्द्रमा लक्ष्यते, तस्माद्-




यमर्थः— तेषां मध्ये यच्छुक्लं रूपं [illegible] चान्द्रमसं चन्द्रमसः कारणं यच्छुक्लं रूपमिति यावत् । तेषां मध्ये यत्कृष्णं रूपं भास्वरं कृष्णवर्णं तदेवान्नसंबन्धि, अन्नशब्देनान्नहेतुर्दिवाकरो लक्ष्यते । तस्माद्ययमर्थः— तेषां मध्ये यत्कृष्णं रूपं भास्वरं कृष्णवर्णं तदेवान्नमन्नशब्देन लक्षितो दिवाकरः, तस्य कारणं सुकृष्णमिति यावत् । 'आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्मयेन सविता रथेन देवो याति भुवनानि पश्यन्' इति श्रुत्या दिवाकरस्य सुकृष्णरूपत्वमवगम्यते । एवं ज्वलनहिमकरदिवाकराणां लोहितशुक्लकृष्णकार्यत्वं ब्रुवती श्रुतित्रयमेव तु सत्यमित्युक्तवती । कारणभूतमरुणादित्रयमेव सत्यं तत्कार्यमग्न्यादित्रयमसत्यमिति सिद्धे तद्दृष्टान्तेन कार्यस्य मनआदिजगतो मिथ्यात्वं कारणस्य ब्रह्मणः सत्यत्वं साधयितुं शक्यमित्यभिप्रायः ॥ ११९ ॥

रुचकप्रमुखं कनकादिमयं
रुचकाद्यभिधाननिमित्तमपि ।

असदित्यवगम्यत एव यतो
व्यभिचारवती रुचकादिमतिः ॥

एवं कारणस्यारुणादेः सत्यत्वं तत्कार्यस्याग्न्यादेरसत्यत्वं च श्रुत्योक्तम् । तर्हि केन दृष्टान्तेनाग्न्यादित्रिकस्य मिथ्यात्वमरुणादित्रिकस्य सत्यत्वं चोक्तमित्याकाङ्क्षायाम् , अत्र दृष्टान्तं दर्शयितुं कनकादेः सत्यत्वं रुचकादेरसत्यत्वं च साधयत्युत्तरश्लोकद्वयेन । तत्राद्येन रुचकादेरसत्यत्वं दर्शयति— रुचकप्रमुखमिति । कनकादिमयं कनकादिकार्यं रुचकप्रमुखं रुचकाद्यभिधाननिमित्तं यद्यपि तथाप्यसदित्येवावगम्यते रुचकादिकमसत्यमिति ज्ञायते । कुतस्तादित्याह— यत इति । रुचकादिमतिर्व्यभिचारवतीति यतः, अतः कारणादसदित्यवगम्यत इत्यर्थः ॥ १२० ॥

न कदाचिदपि व्यभिचारवती
कनकादिमतिः पुरुषस्य यतः ।
तत एव हि सत्यतयाभिमतं
कनकादिविपर्यय एषु न हि ॥

कार्यस्य रुचकादेरसत्यत्वमुक्त्वाधुना कारणस्य कनकादेः सत्यत्वं साधयति— न कदाचिदपीति । द्रष्टुः पुरुषस्य कनकादिमतिः कदाचिदपि न व्यभिचरतीति यतः कनकमिति मतिः कनककार्ये रुचकादौ सर्वत्राप्यनुस्यूतेति यस्मात्तस्मात्कनकादि सत्यतयाभिमतम् । उक्तहेतुं निगमयति— विपर्यय एषु न हीति । एषु कनकादिषु रुचकादिषु च विपर्ययो न हि व्यत्यासो नास्ति यस्मात्तस्मात्कनकादि सत्यं रुचकाद्यसत्यमित्यर्थः ॥ १२१ ॥

रुचकादिसमं ज्वलनादि भवे-
दनृतत्वगुणेन तु सत्यतया ।
अरुणप्रमुखं ज्वलनप्रभृति-
प्रकृतित्रितयं कनकादिसमम् ॥१२२॥

तर्हि दृष्टान्तदार्ष्टान्तिकयोर्मध्ये कस्य केन साम्यमित्यपेक्षायामाह— रुचकादीति । ज्वलनादि अग्न्यादित्रितयं रुचकादिसमं भवेत् । तत्र हेतुं कथयति— अनृतत्वगुणेनेति । अनृतत्वगुणवत्त्वादित्यर्थः । ज्वलनप्रभृतिप्रकृति-

त्रितयं ज्वलनप्रभृते: कारणत्रितयस्य लक्षणप्रमुखं सत्यत्वादेव कनकादिसमम् ॥ १२२ ॥

अनयोपमयानृततामवद-
च्छ्रुतिरग्निदिवाकरचन्द्रमसाम् ।
अमृषात्वमपि श्रुतिरुक्तवती
त्रितयस्य तु रक्तपुरःसरिणः ॥

अनेन कनकरुचकादिदृष्टान्तेन कारणस्यारुणादेः सत्यत्वं कार्यस्याग्न्यादेरसत्यत्वमुक्तवती श्रुतिरित्याह— अनयेति । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम्' इत्यादिना निखिलस्य कार्यस्य कारणतावन्मात्रत्वं वदति श्रुतिः । अनयोपमया कनकरुचकादिदृष्टान्तेनाग्निदिवाकरचन्द्रमसामनृततामवददुक्तवतीति । किं च रक्तपुरःसरिणस्त्रितयस्यामृषात्वमपि सत्यत्वमप्युक्तवतीत्यर्थः ॥ १२३ ॥

अनृतत्वमिदं ज्वलनप्रभृते-
र्यदवादि भवेत्तदुदाहरणम् ।
वितथा विकृतिः सततं सकला
न तथा प्रकृतिः श्रुतिनिश्चयतः ॥

उपमानशतैर्मनआदिजगतोऽनृतत्वं श्रुतिरुक्तवतीति पूर्वमुक्तम् । इदानीं तदुपमानशतं विविच्य दर्शयति— अनृतत्वमिति । रुचकादिदृष्टान्तेन ज्वलनप्रभृतेर्यदनृतत्वमवादि तदिदमुदाहरणं भवेत् । तत्कथमित्यत्राह— वितथेति । विकृतिमात्रं सर्वं वितथमेव मिथ्यैव रुचकादिवदित्यर्थः । न तथा प्रकृतिः कारणं तु तथाविधं न भवेत्, किं तु सत्यमेवेति श्रुतिनिश्चयतः श्रुत्या निश्चयेनोक्तमित्यर्थः ॥ १२४ ॥

प्रदिदर्शयिषुर्वसनस्य यथा
वितथत्वमपास्यति तन्तुगुणम् ।
अपकृष्य तु तन्तुसमं त्रितयं
ज्वलनप्रमुखस्य तथोक्तवती ॥१२५॥

कारणद्रव्यापकर्षणं कार्यद्रव्यस्यानृतत्वसाधकमित्येतल्लोकेऽपि दृष्टमित्याह— **प्रदिदर्शयिषुरिति** । वसनस्य वस्त्रस्य वितथत्वं प्रदिदर्शयिषुः पुरुषस्तन्तुगुणमपकृष्य तन्तुकार्यं पटं यथापास्यति निरस्यतीदं वस्त्रं तन्तुमात्रमिति, तथात्रापि तन्तुसमं त्रितयं कारणभूतमरुणादित्रितयमपकृष्य स्वीकृत्य ज्वलनप्रमुखस्याग्न्यादित्रितयस्य मिथ्यात्वमुक्तवतीत्यर्थः ॥ १२५ ॥

**अवनिप्रमुखं वियदन्तमिदं**
**विकृतिस्तु परस्य भवत्यपरम् ।**
**अनृतं त्वपरं विकृतिस्तु यतो-**
**ऽवितथं तु परं प्रकृतिस्तु यतः ॥**

एवमग्न्यादिदृष्टान्तेन मनआदिजगतो मिथ्यात्वमरुणादिदृष्टान्तेन ब्रह्मणः सत्यत्वं च श्रुत्या विवक्षितमित्युक्तम् । इदानीं तत्र हेत्वाकाङ्क्षायां कार्यत्वात्कारणत्वाच्चेत्युभयत्र हेतुमाह— **अवनिप्रमुखमिति** । अवनिप्रमुखं वियदन्तमिदमपरमर्वाचीनं परस्य ब्रह्मणो विकृतिः कार्यं भवति । किमतस्तत्र फलितमित्यत्राह— **अनृतमिति** । अपरं दृश्य-

तया प्रतीयमानं जगत्सकलमनृतं परस्य ब्रह्मणो विकृतिस्तु यतः कार्यं तु यतः, अतः कारणादनृतम् । परं तु कारणं ब्रह्म तु अवितथं वितथं न भवति । कुत इत्यत्राह— प्रकृतिस्तु यत इति । कारणं तु यस्मात्तस्मादवितथं सत्यमित्यर्थः । अयं भावः— दृश्यं मनआदि जगदनृतं भवितुमर्हति कार्यत्वादग्न्यादिवत् । परं ब्रह्म तु सत्यं भवितुमर्हति कारणत्वादरुणादिवत् । अग्न्यादित्रितयमसत्यं भवितुमर्हति कार्यत्वात्कुचकादिवत् । अरुणप्रमुखं त्रितयं सत्यं भवितुमर्हति कारणत्वात्कनकादिवदिति समुदायार्थः ॥

**अत एतदसेधि सदुक्ति परं**
**न मृषेति मृषा तु ततोऽन्यदिति ।**
**इति सिद्धमतो यदवादि मया**
**जनिमज्जगदेतदभूतमिति ॥ १२७ ॥**

यथोक्तेन हेतुना साधितमर्थमुपसंहरति— अत इति । कारणं सत्यं कार्यमसत्यमिति यस्मात्तस्मात्सदुक्तिपरं ब्रह्म न मृषा मृषा न भवेत् । ततोऽन्यत्तु मृषा तस्माद्ब्रह्मणोऽन्यत्सर्वं मृषा असत्यमित्येतदसेधि सिद्धम् । ततः किमिति तत्राह—

इति सिद्धमिति । जनिमज्जगदेतदभूतमिति मया यत्पूर्व-मवादि तदिदं सिद्धमित्यर्थः ॥ १२७ ॥

मनसोऽप्यनृतत्वमसेध्यमुतः
प्रतिपादितहेतुत एव भवेत् ।
चरितं च तदीयमसत्यमतः
परिनिर्मितवारणचेष्टितवत् ॥ १२८ ॥

ननूक्तहेतुना जगतो मिथ्यात्वं भवतु, मनसस्तच्चरि-तस्य वा जागरितादेश्च न मिथ्यात्वं सिद्धमित्यत्राह— मनस इति । अमुतः प्रतिपादितहेतुत एव मनसोऽप्यनृतत्व-मसेधि, कार्यत्वादित्यनेनैव हेतुना मनसोऽप्यनृतत्वं सिद्ध-मित्यर्थः । यस्मान्मनसोऽनृतत्वं तत एव तदीयं चरितम-वस्थात्रयमप्यनृतं भवेत । तत्र दृष्टान्तमाह— परिनिर्मि-तेति । यथा परिनिर्मितवारणचेष्टितमसत्यमसत्यधर्मत्वात्तद्व-दत्राप्यसत्यधर्मत्वादवस्थात्रयमसत्यमित्यर्थः ॥ १२८ ॥

ननु नाभ्यवदच्छ्रुतिरुद्भवनं
मनसस्तु सतो न च खप्रमुखात् ।

कथमस्य भवेदनृतत्वगति-
मनसो भगवन्वद निश्चयतः ॥१२९॥

ननु मनसः कार्यत्वे सिद्धे मनोऽनृतं स्यात्, तदेव नास्त्यश्रुतत्वादिति शङ्कते पूर्ववादी— नन्विति । सतः परमात्मनः सकाशान्मनस उद्भवनं श्रुतिर्नाभ्यवदत् स्वप्रमुखादुद्भवनं मनसो नाभ्यवदत् । तस्मादस्य मनसोऽनृतत्वगतिरसत्यत्वावगतिः कथं भवेत्, भो भगवन्विचार्य वदेत्यर्थः ॥ १२९ ॥

ननु सप्तम आत्मन उद्भवनं
मनसोऽभिदधावसुनापि सह ।
कथमस्य भवेदमृषात्वगति-
र्मनसो विकृतित्वगुणस्य वद ॥१३०॥

ननु नैतच्चोद्यं घटते, छान्दोग्यसप्तमे 'आत्मनो मनः' इति मनसः परमात्मकार्यत्वश्रवणादित्याह सिद्धान्ती— नन्विति । छान्दोग्योपनिषदि सप्तमाध्याये आत्मनः सकाशादसुनापि सह प्राणेन च सह उद्भवनमभिदधौ श्रुतिरिति

यस्मात्तस्माद्विकृतित्वगुणस्य कार्यत्वधर्मकस्य मनसोऽमृषात्वगतिः सत्यत्वावगतिः कथं भवेत् ? तस्मात्परमात्मकार्यत्वश्रवणान्मनसोऽनृतत्वमित्यर्थः ॥ १३० ॥

असुना करणैर्गगनप्रमुखैः
सह मुण्डक उद्भवनं मनसः ।
पुरुषात्परमात्मन उक्तमतो
वितथं मन इत्यवधारय भोः ॥१३१॥

मुण्डकेऽपि मनस उद्भवनं परमात्मनः श्रुतमित्याह—असुनेति । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥' इत्यादिमुण्डकेऽप्यसुना प्राणेन करणैरिन्द्रियैर्गगनप्रमुखैराकाशादिभिश्च सह पुरुषात्परमात्मनः सकाशान्मनस उद्भवनमुक्तमिति यतोऽतः कारणादपि मनो वितथमनृतमित्यवधारय निश्चिन्वित्यर्थः ॥ १३१ ॥

मनसोऽन्नमयत्वमवादि यत-
स्तत एव हि भूतमयत्वगतिः ।

कुशरीरवदेव ततोऽपि भृशं
वितथं मन इत्यवधारय भोः ॥१३२॥

एवं परमात्मकार्यत्वश्रवणान्मनसोऽनृतत्वमुक्तम् ; इदानीं भौतिकत्वश्रवणादपि मनसोऽनृतत्वं सिद्धमित्याह— मनस इति । 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' 'अन्नमशितं त्रेधा विधीयते तस्य योऽणिष्ठो भागस्तन्मनः' इति मनसोऽन्नमयत्वमन्नकार्यत्वमवादि यतोऽत एव कुशरीरवद्भूतमयत्वगतिर्भूतकार्यत्वावगतिस्ततो मनोऽपि वितथमसत्यमित्यवधारयेत्यर्थः ॥ १३२ ॥

कुरु पक्षमिमं गगनप्रमुखं
जनिमत्सकलं न हि सत्यमिति ।
प्रथमं चरमं च न चास्ति यतो
रुचकादिवदित्युपमां च वद ॥१३३॥

एवं कार्यत्वहेतुना मनआदिजगतोऽनृतत्वं साधितम् । इदानीमाद्यन्तवत्त्वादित्यनुमानान्तरेणापि मनआदिजगतोऽनृतत्वं साधयितव्यमिति शिष्यं शिक्षयति— कुर्विति ।

गगनप्रमुखं जनिमत्सकलं जगत्सत्यं न भवतीति पक्षं कुरु प्रतिज्ञां कुरु । तत्र हेतुं कथयति— प्रथमं चरमं च न चास्ति यत इति । तत्र दृष्टान्तमाह— रुचकादिवदित्युपमां च वदेति ॥ १३३ ॥

कनके रुचकादि न पूर्वमभू-
　　श्चरमं च न विद्यत इत्यनृतम् ।
अधुनापि तथैव समस्तमिदं
　　जनिमद्वियदादि भवेदनृतम् ॥

कनकरुचकादिदृष्टान्तदार्ष्टान्तिकार्थान्प्रपञ्चयति— कनक इति । कारणभूते कनके रुचकादिकं कार्यं प्रथमं नाभूच्चरमं च न विद्यते । 'आदावन्तेऽपि यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायादधुना वर्तमानकालेऽपि कनकव्यतिरेकेण रुचकादि न विद्यते यथा तथा जनिमद्वियदादि समस्तमिदं जगदनृतमसत्यं भवेदित्यर्थः ॥ १३४ ॥

कनकादिषु यद्युपजातमभू-
　　द्रुचकप्रमुखं पृथगेव ततः ।

अधिकं परिमाणममीषु कुतो
न भवेदिति वाच्यमवश्यमिदम् ॥

एवं कनकरुचकादिदृष्टान्तेन कार्यं कारणव्यतिरेकेण नास्तीति स्वसिद्धान्तः समर्थितः। तत्रेदमाशङ्क्यते— कार्यकारणयोरत्यन्तभेदोऽस्त्येव तयोस्तादात्म्यप्रतिभासस्तु समवायनिबन्धन इति वैशेषिकादयः। तान्प्रत्याह— कनकादिष्विति। कनकादिषूपजातं रुचकप्रमुखं ततः कनकादेः सकाशात्पृथगेवाभूद्यदि तर्ह्यमीषु रुचकादिष्वधिकं परिमाणं गुरुत्वं कुतो न भवेदिति पृष्टे सति कुशलैस्तार्किकैरिदमवश्यं वाच्यम्। अस्य प्रश्नस्योत्तरं वक्तुं न शक्यत इत्यर्थः॥ १३५॥

कनकप्रभृतेर्व्यतिरिक्तमतो
रुचकादि न विद्यत एव कुतः।
पृथगग्रहणात्कनकप्रभृते-
रिति कारणमेव सदन्यदसत् ॥

इतश्च कार्यकारणयोर्भेदो न युक्त इत्याह—. कनकेति । कनकादिरूपजातं रुचकादि कनकप्रभृतेर्व्यतिरिक्तं न विद्यते । तत्कुत इत्यत्राह— पृथगिति । कनकप्रभृतेः पृथग्ग्रहणाद्भेदेनादर्शनात् । तस्मात्सदा कारणमेव सत्यम् अन्यद्वितरदसत्यमित्यर्थः ॥ १३६ ॥

ननु नाम पृथग्विकृतेः प्रकृते-
रथ रूपमथापि च कार्यमतः ।
कथमव्यतिरिक्ततयावगमः
प्रकृतेर्विकृतेरिति वाच्यमिदम् ॥

ननु तथापि नामरूपाकारैः कार्यकारणयोर्भेद एव युक्त इति शङ्कते पूर्ववादी— नन्विति । प्रकृतेः कारणात्सकाशाद्विकृतेः कार्यस्य नाम तथा रूपमप्याकारोऽपि पृथगेव । यत एवमतः कारणात्प्रकृतेः सकाशाद्विकृतेरव्यतिरिक्ततयावगमः कथं कार्यकारणयोरभेदावगतिः कथम् ? इदं वाक्यं वक्तव्यम् । कारणात्कार्यं भिन्नं भवितुमर्हति नामभेदाद्रूपभेदात्कार्यभेदाच्चेति ॥ १३७ ॥

इह वीरणतन्तुसुवर्णमृदः
कटशाटकहारघटाकृतयः ।
उपलब्धृजनैरुपलब्धिमिता
न भिदास्ति ततः प्रकृतेर्विकृतेः ॥

एतदनुमानं प्रत्यक्षविरुद्धमित्याह सिद्धान्ती— इहेति । इह व्यवहारदशायामुपलब्धृजनैर्वीरणतन्तुसुवर्णमृद एव कटशाटकहारघटाकृतयः कटाद्याकारेणोपलब्धिमिताः । कारणरूपं वीरणतन्त्वादिकमेव कटवस्त्राभरणादिरूपेण दृष्टमिति यतस्ततः कारणादेव प्रकृतेः सकाशाद्विकृतेर्भेदो नास्तीत्यर्थः ॥ १३८ ॥

विकृतिर्यदि नास्ति पृथक्प्रकृते-
र्न घटेत भिदाप्यभिधाप्रभृतेः ।
इति धीर्विफला तव येन जनै-
र्विविदे नयनेन मृदाद्यभिदा ॥

यथोक्तमर्थं विवृणोति— विकृतिरिति । प्रकृतेः सका-

शाब्दिकृतिः पृथङ्नास्ति यदि तर्ह्यभिधाप्रभृतेर्भिदापि न घटेत नामरूपकार्यभेदोऽपि न घटेतेति तव या धीः सा विफला कार्यकारणभेदसाधिका न भवेत् । कुतो न भवेदि-त्यत्राह— नयनेनेति । प्रत्यक्षेण कार्यस्य घटादेर्मृदाद्यभिधा कारणादभेदो जनैर्विविदे विदित इति येन तेन हेतुना तव धीर्विफला स्यादित्यर्थः ॥ १३९ ॥

ननु रूपमथो अपि कार्यमथो
अभिधापि नटस्य पृथग्विदिता ।
न पृथक्त्वमुपैति नटः किमिति
प्रतिवाच्यमवश्यमिदं कुशलैः ॥१४०॥

न केवलं तवानुमानं प्रत्यक्षविरुद्धम् , किं त्वनैकान्तिकं चेत्याह सिद्धान्ती— नन्विति । रूपं कार्यं चाभिधापि तस्य नटस्य पृथग्विदिता यद्यपि नटः पृथक्त्वं किमिति नोपैतीति मया पृष्टे सति कुशलैर्न्यायकुशलैर्भवद्भिरिदमवश्यं प्रतिवाच्यं प्रतिवक्तव्यम् । अस्योत्तरं तव पित्रापि न शक्यते वक्तुमित्यभिप्रायः ॥ १४० ॥

असतो न कथंचन जन्म भवे-
त्तदसत्त्वत एव खपुष्पमिव ।
न सतोऽस्ति भवः पुरतोऽपि भवा-
द्यत आत्मवदेव सदिष्टमिति ॥

सदसत्सदसतामुत्पत्त्यसंभवेन कार्यकारणत्वस्य कल्पितत्वाच्च कार्यकारणव्यतिरेकेण नास्तीत्युत्तरेण कतिपयग्रन्थेनाह— असतो न कथंचन जन्म भवेदित्यादिना । तत्रासदिति वैशेषिकमतम् । सदिति सांख्यमतम् । सदसदिति दिगम्बरमतम् । तत्र प्रथमं वैशेषिकमतं निराकरोति— असत इति । उत्पत्तेः प्रागसतः कार्यस्य न कथंचन जन्म भवेत् । तत्र हेतुमाह— तदसत्त्वत एवेति । कार्यस्यात्यन्तमसत्त्वादेव । खपुष्पमिवाकाशपुष्पवदित्यर्थः । यद्यसतो जन्म न संभवेत्तर्हि सतो जन्मास्तीति सांख्याः, तन्मतं दूषयति— न सतोऽस्तीति । उत्पत्तेः प्रागेव सतो विद्यमानस्य कार्यस्य भवो जन्म न संभवतीति । कुतो न संभवतीत्यत्राह— पुरतोऽपि भवादिति । उत्पत्तेः प्रागेव सत्त्वादात्मवत् । न तथात्, विप्रतिपत्तिस्त्याह यत आत्म-

चैव सदिष्टमिति । सत्कार्यं सर्वदा सदेवेष्टमिति परमार्थतत्त्वं यस्मादेवं तस्मात्सदसतोर्जन्म न संभवतीत्यर्थः ॥ १४१ ॥

कपिलासुरिपञ्चशिखादिमतं
परिगृह्य वदेद्यदि कश्चिदिदम् ।
न कदाचन जन्म वदामि सतः
प्रवदामि तु यच्छृणु तत्त्वमपि ॥

सतो जन्म न संभवतीत्युक्तमुपश्रुत्य सत्यकार्यवादिनः सर्वे संभूयोत्तिष्ठन्तीति दर्शयति– कपिलासुरीति । कपिलासुरिपञ्चशिखादिमतम् । पञ्चशिखशब्देन कश्चित्पूर्वमीमांसक उच्यते । आदिशब्देन सांख्यचार्वाकमीमांसका उच्यन्ते । सांख्यचार्वाकमीमांसकानां मतं परिगृह्य कश्चित्सत्कार्यवादीदं वदेद्यदि । इदंशब्देन निर्दिष्टं किमित्यपेक्षायां तद्दर्शयति— न कदाचनेति । न कदाचन सतो जन्म वदामि । तर्हि किं वदसीत्यत्राह— प्रवदामीति । यत्प्रवदामि तत्त्वमपि शृणु सावधानमतिर्भवेत्यर्थः ॥ १४२ ॥

प्रकृतावविशिष्टतया यदभू-

दधुना तु तदेव विशेषयुतम् ।

निरवद्यमिदं प्रतिभाति मम

प्रवदात्र विरोधमवैषि यदि ॥१४३॥

अहं यत्प्रवदामि तत्त्वमपि शृणिवति यत्सत्कार्यवादि-नोक्तमिदानीं तत्प्रवदति— प्रकृताविति । प्रागेव विद्य-मानं यत्कार्यं प्रकृतावविशिष्टतयाभूत्कारणे निर्विशेषतया स्थितं तदेवाधुनोत्पत्तिसमये विशेषयुतं सविशेषमासीदितीदं मतं निरवद्यं मम भाति । अत्र विरोधमवैषि यद्यवगच्छसि यदि तर्हि विरोधं वद । अस्मिन्मते विरोधो नास्तीति सत्कार्यवादिनोऽभिप्रायः ॥ १४३ ॥

सदयुज्यत येन गुणेन पुरा

प्रकृतौ स इहास्ति न वेति वद ।

यदि विद्यत एव पुरा प्रकृता-

वधुनापि विशेषयुतत्वमसत् ॥१४४॥

अत्र विरोधं वदेत्युपश्रुत्य सिद्धान्ती विकल्प्य विरोधमाह— सदिति । सत्कार्यमुत्पत्तिसमये येन गुणेनायुज्यत युक्तमासीत्स तु गुणः स तु विशेषः पुरोत्पत्तेः प्राक्प्रकृतावस्ति न वेति । प्रथमपक्षे दूषणमाह— यदि विद्यत इति । स तु विशेषः पुरा प्रकृतौ विद्यते यदि तर्ह्यधुना विशेषयुतमिति त्वयोक्तं तदसत् , अयुक्तमित्यर्थः ॥ १४४ ॥

**यदि नास्ति पुरा स गुणः प्रकृता-**
**वसदुद्भवनं भवतोऽभिमतम् ।**
**जननेन च सत्त्वमुपात्तवतो**
**जनिमत्त्वत एव विनाष्टिरपि ॥१४५॥**

नास्तीति द्वितीयं पक्षं दूषयति— यदीति । स गुणः स तु विशेषः पुरा प्रकृतौ कारणे नास्ति यदि तर्ह्यसदुद्भवनं भवतोऽभिमतं सत्कार्यवादिना भवतासदुत्पत्तिरङ्गीकृता स्यात्तथा सति तवापसिद्धान्तः प्रसज्येत । न केवलमसदुत्पत्तेरङ्गीकारः सद्विनाशश्च प्राप्नोतीति दूषणान्तरमाह— जननेनेति । जननेन जन्मना सत्त्वमुपात्तवतः कार्यस्य जनिमत्त्वत एवोत्पत्तिमत्त्वादेव विनाष्टिरपि प्राप्नोति । सतो वि-

नाशोऽपि त्वयाङ्गीकृतः स्यादित्यर्थः ॥ १४५ ॥

भवतोऽभिमतं परिहर्तुमिदं
न कथंचन शक्यत इत्यमुतः ।
कणभक्षमतेन समत्वमिदं
भवतोऽभिमतं शनकैरगमत् ॥१४६॥

ननु भवत्वसदुत्पत्तिः सद्विनाशाभ्युपगमश्च, तथा सति को विरोध इत्यत्राह— भवत इति । भवतोऽभिमतमङ्गीकृतमिदमसदुद्भवनं सतो विनशनं च कथंचन परिहर्तुं न शक्यत इत्यमुतो हेतोर्भवतोऽभिमतमसतो भवनं कणभक्षमतेन कणादमतेन समत्वं साम्यं शनकैरगमच्छनैः शनैः प्राप्तमित्यर्थः ॥ १४६ ॥

असतो भवनं नशनं च सतः
कणभोजिमतं विदितं कविभिः ।
उपपत्तिविरुद्धतया सुभृशं
तदभाणि मयापि विरुद्धतया ॥

तर्हि कणादमतं किमित्याकाङ्क्षायां तन्मतं दर्शयति— **असत इति**। प्रागसतः सत्ता समवायो जन्मेत्यङ्गीकारादसतः कार्यस्य भवनमुत्पत्तिः सतो नशनं चेति कणभोजिमतं कविभिः पूर्वाचार्यैर्विदितम्। अस्तु नामैवं कणादमतं ततः किमायातमित्यत्राह— उपपत्तीति। उपपत्तिविरुद्धतया न्यायविरुद्धतयासतो जन्म सतो नशनं चेत्येतदुभयं सुतरां युक्तिविरुद्धतयाभाणि भणितं चाचार्यैः। कार्यस्यानिर्वचनीयत्ववादिना मयापि तदुभयमुपपत्तिविरुद्धतयाभाणि। सदसतोर्जन्मासंभवात्कार्यस्यानिर्वचनीयत्वमेव मयाप्युक्तमित्यर्थः॥ १४७॥

**प्रतिषिद्धमिदं कणभोजिमतं**
**हरिणापि समस्तगुरोर्गुरुणा।**
**वचनेन तु नासत इत्यमुना**
**ब्रुवता च पृथातनयाय हितम्॥**

इतश्च कारणादिदमयुक्तमित्याह— **प्रतिषिद्धमिति**। समस्तगुरोर्गुरुणा हरिणा 'नासतो विद्यते भावो नाभावो विद्यते सतः' इत्यमुना वचनेनेदं कणभोजिमतं प्रतिषिद्धं

निरस्तम् । नन्वर्जुनं प्रलोभयितुं हरिणा कणादमतं निराकृतं न तु हितोपदेशं कर्तुमिति चेन्नैवमित्याह— ब्रुवता चेति । पृथातनयाय कुन्तीपुत्राय स्वबान्धवायार्जुनाय स्वभक्ताय हितं ब्रुवता हितोपदेशं कुर्वता हरिणा कणभोजिमतं निरस्तमित्यर्थः ॥ १४८ ॥

**असतश्च सतश्च न जन्म भवे-**
**दिति पूर्वमवाद्युपपत्तियुतम् ।**
**सदसच्च न जायत एव कुतो**
**न हि वस्तु तथाविधमस्ति यतः ॥**

एवं सदसतोर्जन्म निरस्तमनूद्य दिगम्बरमतं निरस्यति— **असत इति** । असतश्च सतश्च न जन्म भवेदिति पूर्वमुपपत्तियुतं युक्तिसहितं मयावादि वादितम् । सदसच्च सदसदात्मकं कार्यं न जायते । तत्र हेतुं पृच्छति— कुत इति । हेतुं कथयति सिद्धान्ती— न हीति । तथाविधं सदसदात्मकं वस्त्वेव नास्तीति यतः, अतस्तस्य जन्मापि दूरोत्सारितमित्यर्थः ॥ १४९ ॥

सदसत्त्वमतीत्य मनःप्रभृते-
न कथंचन वृत्तिरिहास्ति यतः ।
तत एव मनःप्रमुखस्य भवो
न भवेदिति सर्वसुवेदमिति ॥१५०॥

सदसत्सदसतामुत्पत्त्यसंभवे पारिशेष्यात्कार्यस्यानिर्वच-
नीयत्वं सिद्धमित्याह सिद्धान्ती— सदसत्त्वमिति । एकस्य
वस्तुनः सदसदात्मकत्वासंभवान्मनःप्रभृतेर्जगतः सदसत्त्व-
मतीत्य सत्त्वमसत्त्वं वातीत्य कथंचन वृत्तिर्नास्ति प्रकारा-
न्तरेण वृत्तिर्नास्तीति यतस्तत एव मनःप्रमुखस्य जगत
उत्पत्तिविनाशश्रवणाच्च जन्मविनाशान्यथानुपपत्त्यानिर्वचनी-
यत्वं सिद्धमित्यर्थः ॥ १५० ॥

यदि नाम कथंचिदमुष्य भवः
सदसत्त्वमपेक्ष्य भविष्यति वः ।
अमृषात्वममुष्य तथापि न तु
श्रुतिरस्य मृषात्वमुवाच यतः ॥१५१॥

सदसद्वादिनां दुर्लभत्वमुपलभ्य प्रौढिवादेनाह सिद्धान्ती— यदीति । वो युष्माकं मतेऽमुष्य मनआदेः सदसत्त्वमपेक्ष्य सदसत्त्वयोरन्यतरं पक्षमपेक्ष्याश्रित्य कथंचिद्भवो जन्म भविष्यति यदि नाम तथाप्यमुष्य मनआदेरमृषात्वं सत्यत्वं नास्ति । तत्र हेतुमाह— श्रुतिरिति । 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं विश्वम्' 'सर्वं खल्विदं ब्रह्म' 'वाचारम्भणं विकारो नामधेयम्' इत्यादिश्रुतिरस्य जगतो मृषात्वमुवाच यतोऽतः कारणान्मनआदेरन्वयव्यतिरेकभावपरिहारेण शुक्तिकारजतादिवन्मिथ्यात्वमित्यर्थः ॥ १५१ ॥

मनसोऽनृततैवमवादि यत-
स्तत एव हि तस्य मृषा चरितम् ।
यत एव मृषा मनसश्चरितं
तत एव पुरोदितसिद्धिरभूत् ॥१५२॥

मनआदेर्मिथ्यात्वे सिद्धे यत्फलितं तदाह— मनस इति । श्रुत्या मनसोऽनृतता मिथ्यात्वमवादि यतस्तत एव तस्य मनसश्चरितमवस्थात्रयमपि मृषा भवेत् । मनसश्चरितं मृषेति यतस्तत एव पुरोदितसिद्धिरभूत् ॥ १५२ ॥

यदपेक्ष्य तु नाम भवेत्त्रितयं
परमात्मपदस्य तुरीयमिति ।
तदसत्यमसत्यगुणस्तु यतः
परिनिर्मितसर्पविसर्पणवत् ॥ १५३ ॥

किं पुनस्तत्पुरोदितमित्यपेक्षायां तद्दर्शयति— यदिति । त्रितयं यदवस्थात्रयमपेक्ष्य परमात्मपदस्य तुरीयमिति नाम भवेत्तदवस्थात्रयमसत्यम् । तत्र हेतुमाह— असत्यगुणस्तु यत इति । असत्यस्य मनसो गुणोऽवस्थात्रयमिति यस्मात्तस्मात्तदवस्थात्रयमसत्यम् । तत्र दृष्टान्तमाह— परिनिर्मितसर्पविसर्पणवदिति । यथा रज्ज्वामारोपितस्य सर्पस्यासत्यत्वात्तद्विसर्पणस्याप्यसत्यत्वं तद्वन्मनसोऽसत्यत्वात्तद्धर्मस्य जागरितादेरप्यसत्यत्वमित्यर्थः ॥ १५३ ॥

निखिलस्य मनःप्रमुखस्य यतो
वितथत्वमवादि पुरा तु मया ।
श्रुतियुक्तिबलेन ततोऽद्वयकं
परमक्षरमेव सदन्यदसत् ॥ १५४ ॥

अवस्थात्रयस्य मायामयत्वात्तन्निबन्धनं तुरीयत्वमपि नाममात्रम् । अतो निर्विशेषं प्रत्यक्पदमित्युक्तम् । इदानीं परमप्रमेयमुपसंहरति— निखिलस्येति । मनःप्रमुखस्य निखिलस्य जगतो वितथत्वं मया पूर्वं श्रुतियुक्तिबलेनावादीति यतस्ततः कारणादद्वयकं परमक्षरमेव सत्सत्यम्, अन्यत्सर्वं कार्यकारणात्मकं द्वैतमसदसत्यमित्यर्थः ॥१५४॥

यदपूर्वमबाह्यमनन्तरकं
  न च किंचन तस्य भवत्यपरम् ।
इति वेदवचोऽनुशशास यतो
  वितथं परतोऽन्यदतः प्रगतम् ॥

प्रतिषिध्य यतो बहिरन्तरपि
  स्वविलक्षणमात्मन उक्तवती ।
अवबोधघनत्वमतोऽन्यदस-
  ल्लवणैकरसत्वनिदर्शनतः ॥ १५६ ॥

ब्रह्मव्यतिरिक्तं सर्वं मायामयत्वादसत्यमित्येतच्छ्रुतियु-

क्तिभ्यां सिद्धमित्युक्तम् । इदानीं कासौ श्रुतिरित्यपेक्षायाम् "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म' इत्यादिकेत्याह श्लोकद्वयेन— यदिति । पूर्वं कारणं तद्रहितमपूर्वं स्वयं सिद्धत्वात्कारणरहितम्, किं चाबाह्यं जात्यादिरहितम्, अनन्तरं नानात्वरहितम्, यदेव निर्विशेषं परमात्मपदं तस्यापरं किंचिन्नास्ति स्वव्यतिरिक्तं किंचिदपि नास्तीत्येवं वेदवचोऽनुशशासेति यतोऽत एव परतः परस्मादक्षरादन्यद्बोधघनादन्यदसत्यं वितथमिति प्रगतं प्रकर्षेणावगतमिति । प्रतिषिध्येति । एवं बहिरन्तरव्यात्मनः स्वविलक्षणं सर्वं प्रतिषिध्य, अवबोधघनत्वं प्रज्ञानघनत्वं लवणैकरसत्वनिदर्शनतः यथा सलिलकार्यं लवणं सलिलमात्रं तथा परमात्मविवर्तं जगदपि परमात्मैवेत्यात्मनोऽवबोधघनत्वमुक्तवती श्रुतिः । 'अपूर्वमनपरम्' 'स यथा सैन्धवघनः' इत्यादिका श्रुतिरात्मनो निर्विशेषत्वमुक्तवतीत्यर्थः ॥ १५५, १५६ ॥

**लवणैकरसत्वसमं भणितं**
**स्वविलक्षणवस्तुनिषेधनतः ।**

अवबोधघनं परमात्मपदं
त्वमवेहि तदस्मि सदाहमिति ॥

एवं निर्विशेषतया परिशोधितस्य त्वंपदार्थस्य परिशोधितेन तत्पदार्थेनैक्यमत्र महावाक्यार्थ इति कथयति—लवणेति । स्वविलक्षणवस्तुनिषेधनत आत्मव्यतिरिक्तवस्तुनिषेधेन लवणैकरसत्वसमं कार्यकारणसंबन्धरहितमवबोधघनं यत्परमात्मपदं तदहमस्मीति त्वं सदा निरन्तरमवेहि । हेयोपादेयबुद्धिरहितः सन्परमानन्दतया तिष्ठेत्यर्थः ॥ १५७ ॥

अणु नो न च तद्विपरीतगुणं
न च ह्रस्वमतो न च दीर्घमपि ।
प्रतिषिद्धसमस्तविशेषणकं
परमक्षरमात्मतयाश्रय भोः ॥१५८॥

प्रतिपत्तिसौकर्यार्थं यथोक्तमखण्डवाक्यार्थं प्रपञ्चयति—अणु नेति । स्थूलशरीरधर्मह्रस्वत्वदीर्घत्वरहितं सूक्ष्मशरीरधर्माणुत्वरहितं तद्विपरीताकाशादिधर्ममहत्त्वरहितम् । एवं

प्रतिषिद्धसमस्तविशेषणकं निर्विशेषं परमक्षरमात्मतयाश्रय, स्वस्वरूपत्वेनाश्रयेत्यर्थः ॥ १५८ ॥

असुबुद्धिशरीरगुणान्षडिमा-
नविवेकिजनैर्दृशिधर्मतया ।
प्रतिपन्नतमान्प्रविहाय शनै-
र्दृशिमात्रमवेहि सदाहमिति ॥१५९॥

अनेन श्लोकेन तत्पदार्थप्राधान्येनाखण्डवाक्यार्थं प्रपञ्च्य त्वंपदार्थप्राधान्येन प्रपञ्चयति— असुबुद्धीति । अविवेकिभयाविद्वज्जनैर्दृशिधर्मतया प्रत्यगात्मधर्मतया प्रतिपन्नतमान्षट्संख्याकानसुबुद्धिशरीरगुणानशनायापिपासाशोकमोहजन्मरणलक्षणाननात्मधर्मतया प्रविहाय हित्वा शनैः क्रमेणावशिष्टं दृशिमात्रं केवलं ज्योतिःस्वरूपं प्रत्यगात्मानमहमित्यवेहि जानीहीत्यर्थः ॥ १५९ ॥

अहिनिर्ल्वयनीमहिरात्मतया
जगृहे परिमोक्षणतस्तु पुरा ।

परिमुच्य तु तामुरगः स्वबिले
न पुनः समवेक्षत आत्मतया ॥

अविवेकत आत्मतया विदितं
कुशरीरमिदं भवताप्यहिवत् ।
अहिवत्त्यज देहमिमं त्वमपि
प्रतिपद्य चिदात्मकमात्मतया ॥

एवमखण्डवाक्यार्थो दर्शितः । इदानीमेवंभूतवाक्यार्थज्ञानं यथा दृढतरं भवति तथा प्रारब्धकर्मभोगपर्यन्तं जीवन्मुक्तिरूपं दग्धपटन्यायेन बाधितानुवृत्त्या द्वैतदर्शनाभासपरमानन्दैकरूपपरितृप्तिलक्षणं वाक्यार्थजज्ञानफलं प्राप्तो भविष्यतीति दृष्टान्तेन दर्शयति श्लोकद्वयेन— अहिनिरिति । 'अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते" इति जीवन्मुक्तिश्रुतेः । यथाहिः सर्पः परिमोक्षणतः पुराहिनिर्ल्वयनीं भुजङ्गनिर्मोकमात्मतया जगृहे गृहीतवान्, पुनः कालान्तरे स उरगः अहिनिर्ल्वयनीं कञ्चुकं स्वबिले परिमुच्य पुनरात्मत्वेन न समीक्षते न

पश्यति, तथा भवतापीदं कुशरीरमन्नमयादिकञ्चुकमविवेकत आत्मानात्मविवेकाभावेनात्मतया विदितमहिवदिति यस्मात्तस्मात्त्वमपि चिदात्मकं ज्ञानात्मकं वस्तु स्वात्मतया प्रतिपद्य पश्चादहिवदिमं देहं त्यज । देहाद्यभिमानं परित्यजेत्यर्थः ॥ १६०, १६१ ॥

रजनीदिवसौ न रवेर्भवतः
प्रभया सततं युत एष यतः ।
अविवेकविवेकगुणावपि तौ
भवतो न रवेरिव नित्यदृशेः ॥१६२॥

आत्माज्ञानाच्छरीराभिमानः, स चात्मज्ञानान्निवर्तत इत्युक्तम् । तर्ह्यात्मनि ज्ञानाज्ञानसंबन्धोऽस्तीत्याशङ्क्य नेत्याह— रजनीति । रवेः सूर्यस्य रजनीदिवसौ न भवतः । तत्र हेतुमाह— प्रभयेति । एष रविः सततं प्रभया युत इति यतस्ततः कारणात्तस्याहोरात्रे न संभवतः । नित्यदृशेस्तथापि रवेरिवाविवेकविवेकगुणौ न संभवतः, ज्ञानाज्ञानगुणौ न संभवत इत्यर्थः ॥ १६२ ॥

परिशुद्धविबुद्धविमुक्तदृशे-
रविवेकविवेकविवर्जनतः ।
मम बन्धविमोक्षगुणौ भवतो
न कदाचिदपीत्यवगच्छ भृशम् ॥

आत्मनि ज्ञानाज्ञानयोरसंभवाद्बन्धमोक्षावपि न संभवत इत्याह— परिशुद्धेति । परिशुद्धविबुद्धविमुक्तदृशेः सदा शुद्धबुद्धमुक्तस्वभावस्य चिन्मात्रज्योतिषो मम अविवेकविवेकविवर्जनतो ज्ञानाज्ञानविवर्जनतः बन्धमोक्षगुणौ कदाचिदपि न संभवत इति भृशं तात्पर्येणावगच्छ जानीहीत्यर्थः ॥ १६३ ॥

न मम ग्रहणोज्झनमस्ति मया
न परेण दृशोरिति निश्चिनु भोः ।
न हि कस्यचिदात्मनि कर्म भवे-
न्न च कश्चिदिहास्ति मदन्य इति ॥

आत्मनि बन्धमोक्षयोरभावेऽपि ग्रहणोज्झने स्वपरकर्तृके

संभवत इत्याशङ्क्याह— नेति । दृशेर्विज्ञप्तिमात्रस्य निरवयवस्य मम ग्रहणोज्झनं नास्ति मयान्येन वोपादानं परिमोचनं वा नास्तीति भगवन्निश्चिनु । मम ग्रहणोज्झनं नास्तीत्यत्र हेतुमाह— न हीति । कस्यचिदात्मनि स्वस्मिन्कर्म न भवेद्विषयविषयिभावो न भवेत् । एकस्मिन्वस्तुनि कर्तृकर्मभावविरोधादित्यर्थः । परेणाप्यात्मनि हानोपादाने न स्त इत्यत्र हेतुमाह— न चेति । इह लोके मदन्यः कश्चिदात्मा नास्तीति । तत्र प्रमाणाभावादित्यर्थः ॥ १६४ ॥

अहमस्मि चरस्थिरदेहधियां
चरितस्य सदेक्षक एक इति ।
न भवेदत एव मदन्य इति
त्वमवेहि सुमेध इदं सुदृढम् ॥१६५॥

ननु ब्रह्मादिस्थावरान्तेषु शरीरेष्वात्मभेदान्मदन्यः कश्चिदात्मा नास्तीत्येतत्कथं घटत इत्यत्राह— अहमिति । चरस्थिरदेहधियां चरितस्याहमेक एव सदेक्षकः साक्षी यतोऽत एव मदन्यः स्वात्मनोऽन्यो न, अन्यस्यानुपलम्भादेव ।

मदन्यः कश्चिदात्मा न भवेदिहेति हे सुमेध इदं मयोपदिष्टं सुदृढमवेहि ॥ १६५ ॥

गगने विमले जलदादिमले
सति वासति वा न भिदास्ति यथा ।
त्वयि सर्वगते परिशुद्धदृशौ
न भिदास्ति तथा द्वयभेदकृता ॥

तर्हि चरस्थिरदेहादीनि परमार्थतोऽङ्गीकृतानि, तथा सति तत्कृत: कश्चिद्विशेष आत्मनोऽपि स्यादित्याशङ्कयाह —गगन इति । विमले गगने जलदादिमले सति वासति वा यथा भिदा भेदो नास्ति निरवयवत्वात्, तथा सर्वगते परिशुद्धदृशौ त्वय्यपि द्वयभेदकृता भिदा भेदो नास्तीत्यर्थः ॥ १६६ ॥

अनृतं द्वयमित्यवदाम पुरा
व्यवहारमपेक्ष्य तु गीतमिदम् ।
अनृतेन न सत्यमुपैति युजां
न मरीचिजलेन नदी ह्रदिनी ॥

द्वयभेदकृतः कश्चित्कदाचिदात्मनो नास्ति विशेष इति ब्रुवता द्वयसद्भावोऽङ्गीकृतः स्यादित्याशङ्क्याह—अनृतमिति। पुरा बह्वीभिर्युक्तिभिर्द्वैतं अगदनृतमित्यवदाम उक्तवन्तो वयं यस्मात्तस्माद्व्यवहारमपेक्ष्य प्रपञ्चस्य व्यावहारिकं सत्यत्वमपेक्ष्याङ्गीकृत्येदं मया गीतमित्युक्तम्। यस्मादेवं तस्मादनृतेन द्वैतेन सत्यमात्मवस्तु युजां योगं नोपैति। तत्र दृष्टान्तमाह सिद्धान्ती— न मरीचिजलेनेति। ह्रादिनी नदी अगाधजलसंपूर्णजला नदी असत्येन मरीचिजलेन यथा युजां नोपैति तद्वदात्माप्यसत्येन द्वैतेन संबन्धं नोपैतीत्यर्थः॥ १६७॥

बहुनाभिहितेन किमु क्रियते
श्रृणु संग्रहमत्र वदामि ततः।
त्वयि जागरितप्रभृति त्रितयं
परिकल्पितमित्यसदेव सदा॥१६८॥

परिकल्पितमित्यसदित्युदितं
मन इत्यभिशब्दितमागमतः।

उपपत्तिभिरेव च सिद्धमतो
भवतोऽन्यदशेषमभूतमिति ॥ १६९ ॥

एवं तावदस्मिन्प्रकरणे समन्वयाविरोधसाधनफलाख्या-ध्यायार्थचतुष्टयं सविस्तरं वर्णितम् । इदानीं तदेवाध्यायार्थ-चतुष्टयं संक्षिप्य कथयति प्रकरणसमाप्तिपर्यन्तेन ग्रन्थेन । तत्र प्रथमं तत्त्वमस्यादिवाक्यानामद्वितीये ब्रह्मणि सम-न्वयं वक्तुं त्वंपदार्थं परिशोधयति— बहुनेति । एवं महता प्रयत्नेनाभिहितेन किमु क्रियते किं प्रयोजनम् ? ततः कारणादत्र संग्रहं वदामि उक्तमेवार्थं संक्षिप्य कथ-यामि । परिशुद्धदृशौ त्वयि जागरितप्रभृति त्रितयं मनो-धर्ममवस्थात्रयं तत्साक्षिणि त्वयि परिकल्पितमविवेकात् । तस्मादारोपितं सर्वमसदेवासत्यमेव । सर्वकल्पनाहेतुभूतं मन इत्यभिशब्दितमपि परिकल्पितं स्वव्यंध्यस्तं यतोऽत एवागमत उपपत्तिभिरेव च तन्मनोऽसदसत्यमित्युदितम् । अत एव भवतोऽन्यदशेषमभूतमसत्यमिति सिद्धम् ॥

यदबाह्यमनन्तरमेकरसं
यदकार्यमकारणमद्वयकम् ।

यदशेषविशेषविहीनतरं
दृशिरूपमनन्तमृतं तदसि ॥ १७० ॥

एवं त्वंपदार्थं परिशोध्य तत्पदार्थं परिशोधयति— यदिति । अबाह्यं जात्यादिराहितम् , अनन्तरं निरवधिकम् , एकरसं केवलं चिदानन्दस्वरूपम् । यदकार्यमकारणं कार्यकारणास्पृष्टम् । अद्वयकं सजातीयविजातीयस्वगतभेदरहितम् । यदशेषविशेषविहीनतरं कर्तृत्वभोक्तृत्वादिविशेषरहितं दृशिस्वरूपं प्रज्ञानघनम् । अनन्तं देशतः कालतो वस्तुतश्चापरिच्छिन्नम् , ऋतं सत्यं यत्परमात्मपदं तदेव त्वमसीत्येवं प्रत्यगात्मनो ब्रह्मत्वं जानीहीत्यर्थः ॥ १७० ॥

इयदेव मयोपनिषत्सु पदं
परमं विदितं न ततोऽस्त्यधिकम् ।
इति पिप्पलभक्ष इवाभ्यवद-
द्धयवशिष्टमतिं विनिवारयितुम् ॥

एवमखण्डवाक्यार्थमुपदिश्य गुरुः किं कृतवानित्यपेक्षायामाह— इयदिति । पिप्पलादो यथा सुकेशादीञ्शिष्या-

न्प्रत्यवदत्तथाऽभ्यवददित्यर्थः । किमर्थमियद्देवेत्युक्तवानित्यत्राह— अवशिष्टमतिं विनिवारयितुमिति । गुरुणानुपदिष्टां शिष्येणापेक्षितामवशिष्टात्ममतिं विनिवर्तयितुमित्यर्थः ॥

इतरोऽपि गुरुं प्रणिपत्य जगौ
भगवन्निति तारितवानसि माम् ।
अवबोधतरेण समुद्रमिमं
मृतिजन्मजलं सुखदुःखझषम् ॥

एवं गुरुणोपदिष्टः शिष्यः किं कृतवानित्यपेक्षायां शिष्यवाक्यच्छलेन जीवन्मुक्तलक्षणं ज्ञानफलं दर्शयति— इतर इति । भो भगवन्, मृतिजन्मजलं सुखदुःखझषमिमं संसाराब्धिमवबोधतरेण ज्ञानप्लवेन संसारोदधौ पतितं मां सुखेन तारितवानसीत्येवमितरोऽपि-शिष्यो गुरुं प्रणिपत्य जगौ विज्ञापितवान् ॥ १७२ ॥

अधुनास्मि सुनिर्वृत आत्मरतिः
कृतकृत्य उपेक्षक एकमनाः ।

**प्रहसन्विषयान्मृगतोयसमा-**
**न्विचरामि महीं भवता सहितः ॥**

अधुनेति । अधुना सुनिर्वृतोऽस्मि सर्वदात्मरतिः, अत एव कृतकृत्यः सर्वत्राप्युपेक्षकः, अत एवैकमना मृगतोयसमान्मरीच्युदकसमान्विषयान्मनःकल्पितान्प्रहसन् भवता सहितो महीं विचरामीत्युक्तवानित्यर्थः ॥ १७३ ॥

**तव दास्यमहं भृशमामरणा-**
**त्प्रतिपद्य शरीरधृतिं भगवन् ।**
**करवाणि मया शकनीयमिदं**
**तव कर्तुमतोऽन्यदशक्यमिति ॥**

'यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः । आदौ विद्याप्रसिद्ध्यर्थं कृतघ्नत्वापनुत्तये ॥' इति शिवशासनादाचार्यसकाशाल्लब्धविद्यस्य शिष्यस्य गुरुं प्रत्यवश्यं कर्तव्यं यत्तल्लोकशिक्षार्थं दर्शयति— तवेति । यदृच्छया प्राप्ताशनाच्छादनपानादिना शरीरधृतिं प्रतिपद्या मरणाद्देहपतनपर्यन्तं तव दास्यं भृशं करवाणि करिष्यामि । मया शकनीयं

शक्यमिदमेव, अतोऽन्यत्कर्तुमशक्यम्, आत्मज्ञानस्य प्रत्युपकारं कर्तुमशक्यत्वादिदं दास्यमेव मया कर्तुं शक्यम्। किं च 'सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्याय' इति श्रुतेर्यथा पूर्वं याज्ञवल्क्याय तत्त्वोपदेष्ट्रे जनकः स्वराज्यं दत्त्वा तदनन्तरं स्वदेहमपि गुरवे दत्तवान् इममभिप्रायं मनसि कृत्वा मयाप्येवं कर्तव्यमित्युक्तवानित्यर्थः ॥ १७४ ॥

गुरुशिष्यकथाश्रवणेन मया
श्रुतिवच्छ्रुतिसारसमुद्धरणम्।
कृतमित्थमवैति य एतदसौ
न पतत्युदधौ मृतिजन्मजले ॥१७५॥

य एतत्प्रकरणार्थं सम्यग्जानाति तस्य संसारनिवृत्तिरेव फलमिति दर्शयति— गुरुशिष्येति। श्रुतिवद्गुरुशिष्यकथाश्रवणेन गुरुशिष्ययोः कथा तत्त्वनिर्णयफला तस्याः श्रवणेन गुरुशिष्यसंवादरूपेणेत्थं कृतं श्रुतेः सारसमुद्धरणमुपदेशप्रकरणं यो वेत्ति अर्थतो जानाति असौ प्रतिबुद्धतरः शिष्यो मृतिजन्मजले संसारोदधौ न पततीत्यर्थः ॥१७५॥

भगवद्भिरिदं गुरुभक्तियुतैः
पठितव्यमपाठ्यमतोऽन्यजनैः ।
गुरुभक्तिमतः प्रतिभाति यतो
गुरुणोक्तमतोऽन्यभजन्न पठेत् ॥

गुरुदेवताभक्तियुक्तानां परमहंसानामस्मिन्प्रकरणेऽधिकारो नान्येषामित्याह— भगवद्भिरिति । गुरुभक्तियुतैर्भगवद्भिः परमहंसैरिदं प्रकरणं पठितव्यम् । अतोऽन्यजनैरपाठ्यम्, साधनचतुष्टयसंपत्तिरहितैरपाठ्यम् । गुरुभक्तिमत एव गुरुणोक्तमुपदिष्टं प्रतिभाति सफलं भवति । अतोऽन्यभजन्विषयेष्वासक्तबुद्धिर्न पठेदित्यर्थः ॥ १७६ ॥

निगमोऽपि च यस्यइतिप्रभृति-
गुरुभक्तिमतः कथितं गुरुणा ।
प्रतिभाति महात्मन इत्यवद-
त्पठितव्यमतो गुरुभक्तियुतैः ॥

गुरुभक्तिमद्भिरेव संन्यासिभिरिदं पठितव्यमित्युक्तम्;

तत्र किं प्रमाणमित्याकाङ्क्षायाम्, 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥' इति श्रुतिरेव प्रमाणमित्याह— निगमोऽपीति। गुरौ स्नेहवतो विश्वासयुक्तस्य महात्मन एव गुरुणा कथितमुपदिष्टमात्मतत्त्वं प्रतिभाति सम्यक्प्रकाशत इत्येवं निगमोऽप्यवदद्दुक्तवान्। तस्माद्गुरुभक्तिमतैव पठितव्यमित्यर्थः॥ १७७॥

येषां धीसूर्यदीप्त्या
प्रतिहतमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्थ हेतु-
र्जननमरणसंतानदोलाधिरूढेः।
येषां पादौ प्रपन्नाः
श्रुतिशमविनयैर्भूषिताः शिष्यसंघाः
सद्यो मुक्ताः स्थितास्ता-
न्यतिवरमहितान्यावदायुर्नमामि॥

गुरुप्रसादात्परिसमापितग्रन्थः सद्गुरुभक्तिरेव ज्ञानान्तरङ्गसाधनमिति दर्शयितुं ग्रन्थान्ते गुरून्नमस्करोति लोकशिक्षार्थम्— येषां धीसूर्यदीप्त्येति । मे मम जन्ममरणसंतानदोलाधिरूढेः दोलाधिरूढवदितस्ततः संचारशीलस्य स्वान्तस्य मनसो हेतुर्ध्वान्तमज्ञानं येषां गुरूणां धीसूर्यदीप्त्या धीरूपसूर्यप्रकाशेन प्रतिहतमभिभूयैकान्ततोऽत्यन्तं नाशमगमत् । किं च, श्रुतिशमाविनयैर्भूषिताः शिष्यसंघाः शिष्यसमूहाः शमदमादिसाधनसंपन्ना येषां गुरूणां पादौ प्रपन्नाः सन्तः सद्यो मुक्ताः स्थिताः, तान्यतिवरमहितान्यतीनां मध्ये वराः पूज्यत्वेन श्रेष्ठास्तेषामपि पूज्यानेवं विशिष्टान्गुरून्भगवत्पादाख्यान्यावदायुर्नमामि यावज्जीवं नमामीत्यर्थः ॥ १७८ ॥

भूः पादौ यस्य खं चो-
दरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौ-
र्मुखमपि दहनो यस्य वास्तेयमब्धिः ।

अन्तःस्थं यस्य विश्वं

सुरनरखगगोभोगिगन्धर्वदैत्यैः-

श्चित्रं रंरम्यते तं

त्रिभुवनवपुषं विष्णुमीशं नमामि ॥

इति श्री तोटकाचार्यविरचितं

श्रुतिसारसमुद्धरणं

समाप्तम् ॥

गुरुभक्तिवद्भगवद्भक्तिरप्यात्मज्ञानस्यान्तरङ्गसाधनमिति दर्शयितुं विराड्रूपं नारायणं नमस्करोति— भूः पादाविति । विष्णुं नमामीति योजना । विष्णुं व्यापनशीलं त्रिभुवनवपुषं त्रिभुवनमेव वपुर्यस्य तम् । कीदृग्विशिष्टमित्याकाङ्क्षायां विशिनष्टि— भूः पादावित्यादिना । 'पद्भ्यां भूमिः' इति श्रुतेर्यस्य विष्णोः पादौ भूः, यस्योदरं खमाकाशम्, यस्यासुः प्राणोऽनिलो वायुः, यस्य नेत्रे चन्द्रसूर्यौ, यस्य कर्णौ दिशः, यस्य शिरो द्यौः, यस्य मुखमपि दहनोऽग्निः, यस्य वास्तेयमब्धिः शिश्नस्थानं समुद्रः, यस्या-

न्तःस्थं विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं नानाविधं रंरम्यते अतिशयेन रमते, तमेतादृशं त्रिभुवनवपुषमीशं नियन्तारम् 'सहस्रशीर्षा' इत्यादिश्रुतिसिद्धं विष्णुं मुमुक्षुरहं नमामीत्यर्थः ॥ १७९ ॥

इति श्रीपूज्यपादयोगीन्द्रशिष्येण सच्चिदानन्दयोगिना रचिता

**तत्त्वदीपिका तोटकश्लोकदीपिका**

समाप्ता ॥



